# आनन्दाश्रममुद्रणालयस्थग्रन्थानां सूचीपत्रम् ।

| ग्रन्थनाम । | | मूल्यम् । रू० | अ० |
|---|---|---|---|
| १ | गणपत्यथर्वशीर्षम्—सभाष्यम् । ... ... ... | ० | ६ |
| २ | रुद्राध्यायः—सायणाचार्यभट्टभास्करप्रणीतभाष्याभ्यां संवलितः | १ | ६ |
| ३ | पुरुषसूक्तम्—सायणभाष्योपेतम् । ... ... ... | ० | ४ |
| ४ | योगरत्नाकरः—वैद्यकशास्त्रीयग्रन्थोऽतीव पुरातनः । ... | ५ | ० |
| ५ | ईशावास्योपनिषत्—सटीकशांकरभाष्याद्युपेता । ... | ० | १४ |
| ६ | केनोपनिषत्—सटीकशांकरभाष्याद्युपेता । ... ... | १ | ० |
| ७ | काठकोपनिषत्—टीकाद्वयसहितशांकरभाष्योपेता । ... | १ | ४ |
| ८ | प्रश्नोपनिषत्—सटीकशांकरभाष्याद्युपेता । ... ... | १ | ० |
| ९ | मुण्डकोपनिषत्—सटीकशांकरभाष्यद्युपेता । ... ... | ० | १० |
| १० | माण्डूक्योपनिषत्-सटीकशांकरभाष्यगौडपादीयकारिकाद्युपेता । | २ | ५ |
| ११ | ऐतरेयोपनिषत्—सटी[illegible] .. | १ | ४ |
| १२ | तैत्तिरीयोपनिषत्—[illegible] .. | १ | १२ |
| १३ | तैत्तिरीयोपनिषद्भा[illegible]कम् । | २ | २ |
| १४ | छान्दोग्योपनिषत्—[illegible] .. | ५ | ० |
| १५ | बृहदारण्यकोपनिष[illegible] .. | ८ | ० |
| १६ | बृहदारण्यकोपनिष[illegible] । | २२ | ८ |
| १७ | श्वेताश्वतरोपनिषत्—भाष्यदीपिकाद्युपेता । ... ... | २ | ४ |
| १८ | सौरपुराणम्—श्रीमद्द्वैपायनप्रणीतम् । उपपुराणम् । ... | ३ | ० |
| १९ | रसरत्नसमुच्चयः—श्रीमद्वाग्भटाचार्यविरचितः । वैद्यकग्रन्थः । | ३ | १२ |
| २० | जीवन्मुक्तिविवेकः—विद्यारण्यविरचितः सटीकः । ... | ३ | १२ |
| २१ | ब्रह्मसूत्राणि—सटीकशांकरभाष्योपेतानि भागद्वयात्मकानि । | १२ | ० |
| २२ | श्रीमच्छंकरदिग्विजयः-विद्यारण्यकृतः। टीकाटिप्पणीभ्यां सहितः। | ६ | ० |
| २३ | वैयासिकन्यायमालाविस्तरः-भारतीतीर्थमुनिप्रणीतः । ... | १ | १२ |
| २४ | जैमिनीयन्यायमालाविस्तरः—श्रीमाधवप्रणीतः । ... | ८ | ० |
| २५ | सूतसंहिता—माधवकृतटीकोपेता । भागत्रयात्मिका । ... | ११ | ८ |
| २६ | हस्त्यायुर्वेदः—पालकाप्यमुनिविरचितः । ... ... | ७ | ६ |
| २७ | वृन्दमाधवः—श्रीमद्वृन्दप्रणीतः । सटीकः । वैद्यकग्रन्थः । | ६ | १२ |
| २८ | ब्रह्मपुराणम्—श्रीमद्व्यासविरचितम् । प्रथमं महापुराणम् । | ६ | ४ |

| ग्रन्थनाम । | मूल्यम् । | |
|---|---|---|
| | रू० | आ० |
| २९ उपनिषदां समुच्चयः—श्रीनारायणशंकरानन्दकृतदीपिकासहितः। | ६ | १२ |
| ३० नृसिंहपूर्वोत्तरतापनीयोपनिषत्—भाष्याद्युपेता । ... | १ | १२ |
| ३१ बृहदारण्यकोपनिषन्मिताक्षरा—श्रीनित्यानन्दमुनिविरचिता । | २ | १२ |
| ३२ ऐतरेयब्राह्मणम्—सायणभाष्यसमेतम् । भागद्वयात्मकम् ।... | १० | १० |
| ३३ धन्वन्तरीयनिघण्टुः—श्रीधन्वन्तरिविरचितः। वैद्यकग्रन्थः | ६ | ४ |
| ३४ श्रीमद्भगवद्गीता—शांकरभाष्योपेता । ... ... | २ | ० |
| ३४ श्रीमद्भगवद्गीता—सटीकशांकरभाष्योपेता । ... ... | ६ | ४ |
| ३५ संगीतरत्नाकरः—शार्ङ्गदेवकृतः सटीको द्विभागः। गानशास्त्रम्। | १० | ४ |
| ३६ तैत्तिरीयारण्यकम्—सायणभाष्यसमेतं भागद्वयात्मकम् । | ९ | १ |
| ३७ तैत्तिरीयब्राह्मणम्—सायणभाष्यसमेतं भागत्रयात्मकम् ।... | १४ | ८ |
| ३८ ऐतरेयारण्यकम्—सायणभाष्यसहितम् । ... ... | ३ | ० |
| ३९ संस्काररत्नमाला—गोपीनाथभट्टविरचिता । भागद्वयात्मिका। | १२ | ८ |
| ४० संध्याभाष्यसमुच्चयः—खण्डराजश्रीकृष्णपण्डितादिप्रणीतः। | २ | ० |
| ४१ अग्निपुराणम्—महर्षिव्यासप्रणीतम् । महापुराणम् ... | ५ | ४ |
| ४२ तैत्तिरीयसंहिता—सायणभाष्यसमेता । भागनवकात्मिका । | ४८ | १० |
| ४३ वैयाकरणसिद्धान्तकारिकाः—भट्टोजीदीक्षितकृताः सटीकाः। | ० | १२ |
| ४४ श्रीमद्भगवद्गीता—पैशाचभाष्यसमेता । .. ... | १ | ८ |
| ४५ श्रीमद्भगवद्गीता—मधुसूदनश्रीधरकृतटीकोपेता। ... | ५ | ४ |
| ४६ याज्ञवल्क्यस्मृतिः—अपरार्ककृतटीकासहिता भागद्वयात्मिका। | १३ | ० |
| ४७ पातञ्जलयोगसूत्राणि—भाष्यवृत्तिभ्यां समेतानि । ... | ३ | ० |
| ४८ स्मृतीनां समुच्चयः—अङ्गिरःप्रभृतिसप्तविंशतिस्मृत्यात्मकः । | ५ | ० |
| ४९ वायुपुराणम्—महर्षिव्यासप्रणीतम् । महापुराणम् । ... | ४ | १२ |
| ५० यतीन्द्रमतदीपिका—श्रीनिवासदासकृता । प्रकाशटीकोपेता । | १ | ४ |
| ५१ सर्वदर्शनसंग्रहः—माधवाचार्यप्रणीतः। ... ... ... | २ | ० |
| ५२ श्रीमद्गणेशगीता—नीलकण्ठकृतटीकोपेता। ... ... | २ | ० |
| ५३ सत्याषाढश्रौतसूत्रम्—सत्याषाढविरचितं भागदशकात्मकम् । | २८ | ५ |
| ५४ मत्स्यपुराणम्—श्रीमद्द्वैपायनमुनिप्रणीतम् । महापुराणम्। | ६ | ० |
| ५५ पुरुषार्थचिन्तामणिः—आठवलेइत्युपाह्वविष्णुभट्टकृतः। | ४ | ० |
| ५६ नित्याषोडशिकार्णवः—भास्कररायोन्नीतटीकासहितः। | ३ | ८ |

| ग्रन्थनाम । | मूल्यम् । रू० | आ० |
|---|---|---|
| ५७ आचारभूषणम्—हिरण्यकेश्याह्निकमोकोपाह्वत्र्यम्बककृतम् । | ४ | ६ |
| ५८ आचारेन्दुः—माटेइत्युपाह्वत्र्यम्बकविरचितः । ... | ४ | ० |
| ५९ श्राद्धमञ्जरी—केळकरोपाह्वबापूभट्टविरचिता । ... | २ | ० |
| ६० यतिधर्मसंग्रहः—विश्वेश्वरसरस्वतीकृतः । ... ... | १ | १२ |
| ६१ गौतमप्रणीतधर्मसूत्रम्—हरदत्तकृतटीकासमेतम् । ... | २ | ८ |
| ६२ ईशकेनकठप्रश्नमुण्डमाण्डूक्यानन्दवल्लीभृगूपनिषदः-सटीकाः | २ | ८ |
| ६३ छान्दोग्योपनिषत्—रङ्गरामानुजविरचितप्रकाशिकोपेता । | ३ | १२ |
| ६४ बृहदारण्यकोपनिषत्—रङ्गरामानुजविरचितप्रकाशिकोपेता । | ३ | ४ |
| ६५ शाङ्खायनब्राह्मणम्—ऋग्वेदान्तर्गतबाष्कलशाखीयम् । ... | १ | ४ |
| ६६ काव्यप्रकाशः—उद्द्योतयुतप्रदीपसहितः । ... | ६ | ४ |
| ६७ ब्रह्मसूत्राणि—दीपिकासमेतानि । ... ... | ४ | ८ |
| ६८ बृहद्ब्रह्मसंहिता—नारदपञ्चरात्रान्तर्गता । ... ... | १ | १२ |
| ६९ ज्ञानार्णवतन्त्रम्—ईश्वरप्रोक्तम् । तन्त्रशास्त्रग्रन्थः । ... | १ | ४ |
| ७० स्मृत्यर्थसारः—श्रीधराचार्यविरचितः । ... ... | १ | १० |
| ७१ बृहद्योगतरङ्गिणी—त्रिमल्लभट्टविरचिता भागद्वयोपेता । | १० | १२ |
| ७२ परिभाषेन्दुशेखरः—वैद्यनाथकृतगदाख्यटीकायुतः । ... | २ | ६ |
| ७३ गायत्रीपुरश्चरणपद्धतिः—श्रीमच्छंकराचार्यविरचिता ।... | १ | ८ |
| ७४ द्राह्यायणगृह्यसूत्रवृत्तिः—रुद्रस्कन्दप्रणीता । ... | १ | ० |
| ७५ ब्रह्मसूत्रभाष्यार्थरत्नमाला—सुब्रह्मण्यविरचिता । ... | ४ | ४ |
| ७६ ईशकेनकठोपनिषदः—दिगम्बरानुचरकृतव्याख्यासमेताः । | १ | ० |
| ७७ वेदान्तसूत्रमुक्तावलिः—ब्रह्मानन्दसरस्वतीविरचिता । ... | २ | ६ |
| ७८ त्रिस्थलीसेतुः—नारायणभट्टविरचितः । ... ... | ३ | १२ |
| ७९ छान्दोग्योपनिषत्—मिताक्षराव्याख्यासमेता । ... | २ | ० |
| ८० वाक्यवृत्तिः—श्रीमच्छंकराचार्यकृता सटीका । ... | ० | ८ |
| ८१ आश्वलायनश्रौतसूत्रम्—नारायणकृतवृत्तिसमेतम् । ... | ४ | ११ |
| ८२ ब्रह्मसूत्रवृत्तिः—हरिदीक्षितविरचिता । ... ... | २ | ७ |
| ८३ संक्षेपशारीरकम्—व्याख्यासहितं भागद्वयोपेतम् । ... | ९ | १ |
| ८४ अद्वैतामोदः—अभ्यंकरोपाह्ववासुदेवशास्त्रिप्रणीतः । ... | २ | ० |
| ८५ ज्योतिर्निबन्धः—शूरमहाठश्रीशिवराजविरचितः । ... | ३ | १५ |

आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

निवासकरकवीन्द्रपरमानन्दविरचितं

# श्रीशिवभारतम् ।

—:⊙-⊙-⊙-⊙:—

एतत्पुस्तकं

वे० शा० सं० पुरुषोत्तमशास्त्री गनडे इत्येतैः

वे० शा० सं० वासुदेवशास्त्री मराठे इत्येतैश्च

संशोधितम् ।

तच्च

बी. ए. इत्युपपदंधारिभिः

विनायक गणेश आपटे

इत्येतैः

पुण्याख्यपत्तने

श्रीमन्महादेव चिमणाजी आपटे

इत्यभिधेयमहाभागप्रतिष्ठापिते

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८५२

खिस्ताब्दाः १९३०



मूल्यं पञ्चाणकाधिको रूपकः ( १८५ ) ।

# प्रकाशयितुराशयः ।

—:०:—

सुविदितमेवैतच्छ्रुतिस्मृतीतिहासादिपरिशीलनशालिनां प्राचीनार्वाचीनैतदुभयविधपण्डितप्रकाण्डानाम् । यदतर्क्येन्द्रजालिकः षड्गुणैश्वर्यशाली वनमाली भगवान्नारायणः स्थावरजङ्गमात्मकमखिलं जगत्सिसृक्षुः स्वसंकल्पमात्रान्महाभूतोत्पत्तिक्रमेण मनुजप्रभृतयस्तरुशैलान्ता जरायुजाद्यनेकभेदभिन्नाः प्रजाः सह गुणकर्मभिरस्राक्षीदिति ।

तासां चाभ्युदयाखिलव्यवहारयोर्योगक्षेमाय दिव्यदृष्टयस्त्रिकालज्ञाः परमप्राचीना महर्षय आहारविहारादिषु सर्वेष्वेव वर्तनेषु वर्णाश्रमादिप्रतिनियतान्नैकशो धार्मिकान्नियमाञ्श्रुतिस्मृत्यादिषूपनिबद्धान्विधाय चातुर्वर्ण्यसंस्थामेकतन्त्यां सदाचरणरूपायां सूत्रे मणिगणमिव निगडितां व्यवास्थापयन् । तत्र नैकोऽपि तादृशो व्यवहारोऽस्ति यन्मूले धर्मकल्पनेषदपि नास्तीति । भारतवर्षीयो हिन्दुजनसमाजश्चाद्ययावत्तांस्तान्धर्मनिर्बन्धान्यथावन्महत्याऽऽरभट्येत्थं परिपालयति यत्र प्राणसंकटमपि तृणाय मन्यते ।

सेयं सदाचारपद्धतिः प्राचीनसंस्कृतिश्च यदा यदा कालविपर्ययान्मानुषाद्वाऽपराधाद्भारतीयानां दुर्दैवविलासाद्वाऽपि सर्वतो ग्लानिमुपगता भवति सभीहते चाध्यारोढुं जगत्यर्वाचीनसंस्कृतिर्दुराचरणपद्धतिश्च तदा तदाऽवन्यवनबद्धपरिकरो जगदीशिता नानासमयेष्वनेकदशेषु विभिन्नजातिषु च रामकृष्णादिमानुषाकारं गृहीत्वा जगतीतलेऽवतीर्य धर्मध्वंसनपुरःसरं धर्मसंस्थापनाद्यवतारकृत्यमनुतिष्ठतीति स्मृतीतिहासादिषु प्रसिद्धम् । तदुक्तं भगवता स्वयमेव गीतायाम्—

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम् ॥ इति ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ इति च ।

प्रकृतेतिहासप्रधानपुरुषश्छत्रपतिः शिवराजभूपतिरपि तादृशावतारविभूतिकोट्यन्तर्गत एवैको भूत्वा गतः । अत्रार्थे ह्येतच्चरित्रं प्रत्यक्षयतां प्राचीनसंस्कृतिभाजां मनोदेवतैव साक्षिणीति तत्त्वे विप्रतिपत्तौ सैव प्रष्टव्या । तथा हि—विंशेऽध्यायेऽलीशाहेन शिवराजनिग्रहार्थं प्रेषितेऽफजलमहावीरे समायाते सति शिवराजमुद्दिश्य—

त्वं यदा वासुदेवोऽभूस्तदाऽहं नन्दमन्दिरे ।
त्रिदिवात्तव साहाय्यविधानार्थमवातरम् ॥
इदानीमपि दैत्यारे विमुच्य तुलजापुरम् ।
उपेताऽस्मीति जानीहि साहाय्यायैव ते स्वयम् ॥

यथाजातेन कंसेन यथाऽहमवमानिता ।
पूर्वं तथाऽधुनैतेनाप्यवज्ञाताऽस्मि पाप्मना ॥
विधिना विहितोऽस्त्यस्य मृत्युस्त्वत्पाणिनाऽमुना ।
अतस्तिष्ठामि भूत्वा हं कृपाणी तव भूमणे ॥

इति देव्या स्पष्टमुक्तत्वात् । न ह्येतच्छिवराजस्य सामान्यमनुष्यमात्रत्व उपपद्यते एवमादयो भूयांसः प्रसङ्गा अत्रोदाहर्तुं शक्याः । 'अवतारपुरुषः शिवराजस्तस्य भवानी तरवारिः' इत्यबाधितशिष्टलोकप्रसिद्धिरप्यत्रानुकूला भवति । तथा चोपदेशपरम्परा रूपागमप्रामाण्याद्भारतादिप्रसिद्धकृष्णार्जुनवदसौ शिवराजोऽपि कथमिव नावतारो भवेत् ।

किंचानुमानमप्यत्र शिवराजावतारत्व उपोद्बलकं भवति । पूर्वोक्तेन यदा यदेति श्लोकेन धर्मग्लान्यधर्माभ्युत्थानैतद्द्वयान्यतराधिकरणीभूतं कालमवतारग्रहणाधिकरणीभूतकालत्वेन प्रदर्श्य परित्राणायेति श्लोकेनावतारग्रहणस्य साधुपरित्राणदुष्कृद्विनाशधर्मसंस्थापनैतल्लक्षणं प्रयोजनत्रयमुक्तम् । तथा चोक्तप्रयोजनत्रयान्यतमेन साधुपरित्राणादिना कार्येण हेतुना धूमेनेव क्वचिद्व्यक्तिविशेषे पक्षे पर्वतादाविव भगवदवतरणं वह्निमिवानुमीयते । यथा कृष्णद्वैपायनो नारायणावतारः शंकराचार्यश्च शिवावतार इति प्रसिद्धं लोके । शिवराजच्छत्रपतौ गोब्राह्मणप्रतिपालनाफजलादिनिबर्हणभारतीयहिन्दुजनसमाजगतप्राचीनसंस्कृतिसदाचरणपद्धत्यादिचातुर्वर्ण्यधर्मसंस्थापनलक्षणस्य दलत्रयात्मकस्य लक्षणस्य सद्भावात्सुतरां भगवदवतारत्वं सिध्यति । यदा चैकेनापि लक्षणेन बादरायणादाववतारित्वेऽङ्गीकृते यत्र समुदितस्य लक्षणत्रयस्य सद्भावस्तस्य भगवदवतारत्वमिति किमु वक्तव्यं, सविशेषं तस्य भगवत्त्वं भवतीत्येतन्न केनाप्यनङ्गीकरणपात्रतामापादयितुं शक्यम् ।

ननु किमर्थमयं शिवभूपतावीश्वरावतारत्वानुमानरूपो महान् संरभः । यतो मनुष्येष्वपि प्रबलऽबलतरभावः संलक्ष्यते । तत्र यः प्रबलतरः स स्वबलानुसारेण तादृशानि पूर्वोक्तानि कार्याणि साधयेत् । तथा च शिवराजभूपतिर्मानव एव सन् मानवजात्युचिताधिकारविशेषमवलम्ब्यैव धर्मसंस्थापनादीनि महान्ति जगत्परिपालनोपयुक्तानि कार्याण्यकरोदिति किमनयाऽज्ञजनप्रतारणकारिण्याऽवतारकल्पनयेति चेत्—उच्यते । यतोऽयं सर्वज्ञः सर्वशक्तिमांश्च भगवान् वासुदेवो धर्मसंस्थापनादीनि विशिष्टकार्याणि स्वीयावतारग्रहणस्य प्रयोजनत्वेनोल्लिखति तत एवमवगम्यते यदीदृशानि विशिष्टकर्तव्यानि विशिष्टशक्तीश्वरसंपाद्यानि, न मानवजातीयसाध्यानि प्रत्युत मानवजात्युचितशक्तिज्ञानाभ्यां बहिर्भूतानीति । यदि कश्चित्किंचिज्ज्ञः किंचिच्छक्तिमांश्च मानवजातीयोऽपीदृशानि विशिष्टकार्याण्यनुष्ठातुं प्रभवेत्तदा किंकृतोऽयमीश्वरस्यावतारग्रहणे समुद्योगः । किमिति च न प्रमाणत्वेन गृहीतव्यासादिप्रोक्तपुराणेतिहासादिवर्णितरामकृष्णाद्यवतारकथाविलोपप्रसङ्गः ।

अन्यत्र चेदृशविशिष्टकार्यकर्तव्यताधिकारः परमेश्वरस्यैव वर्णितो दृश्यते न मनुजजातीयस्य । तथा हि—

सृष्टिस्थित्यन्तकरणादेक एव महेश्वरः ।
ब्रह्मा विष्णुश्च रुद्रश्च संज्ञामाप पृथक्पृथक् ॥ इति ।

सर्वज्ञः सर्वशक्तिमांश्च स परमेश्वरो ब्रह्मविष्णुमहेशरूपेण त्रिधा विभक्त आत्मनि सर्जनपालनसंहरणरूपेण स्वशक्तिं पृथग्विभज्य क्रमेण प्रत्येकमेकैकां व्यवस्थापितवानिति तदर्थः । ततश्च यथा जगत्सर्जनं ब्रह्मेतरकर्तृकं जगत्संहरणं च रुद्रव्यतिरिक्तकर्तृकं न समस्ति तथा जगत्परिपालनमपि विष्णुपदवाच्येश्वराभिन्नकर्तृकं नास्ति । न श्रूयते च क्वापि पुराणग्रन्थेषु ।

किंच जगदधिकारिसंज्ञानां नियतविषयत्वात्स्वेतरस्पर्शित्वं नेष्यते । अत एव कविकुलशिरोमणिना कालिदासेन रघुवंशे तृतीयसर्गे—

हरिर्यथैकः पुरुषोत्तमः स्मृतो महेश्वरस्त्र्यम्बक एव नापरः ।
तथा विदुर्मां मुनयः शतक्रतुं द्वितीयगामी न हि शब्द एष नः ॥

इत्युक्तम् । एतावता प्रबन्धेन धर्मसंस्थापनाद्यंशत्रयात्मकजगत्परिपालनकर्मणि सर्वशक्तिसंपन्नस्येश्वरजातीयस्यैव सामर्थ्यं प्रक्रमते न यत्किंचिच्छक्तिकस्य मनुजस्यानीश्वरस्येति सिद्धम् । महति कार्ये महत्त्वविशिष्टकर्तृकत्वस्यैवौचित्यात् । तादृशकार्यस्य मानवजात्युचितप्रबलतरशक्तेरपि बहिर्भूतत्वेन तद्विषयत्वासंभवाच्च । तथा चाकुण्ठशक्तीश्वरसाध्यानि कर्माणि मर्यादितशक्तिकः शिवराजोऽनीश्वरः कथं कर्तुं प्रभवेत् । अत एव शिवमहिम्नस्तोत्रे—

अनीशो वा कुर्याद्भुवनजनने कः परिकरो
यतो मन्दास्त्वां प्रत्यमरवर संशेरत इमे ।

इत्युक्तं संगच्छते । एवं च शिवराजच्छत्रपताववतारत्वाकल्पनेन मनुष्यत्वस्यैवानुसंधाने प्रत्यक्षतोऽनुभूयमानं परम्परया श्रूयमाणमितिहासोट्टङ्कितं च साधुपरित्राणादि विशिष्टशक्तिसाध्यं कर्म किमपि कथमपि न युज्येत । युज्यते त्वीश्वरावतारत्वात्मिकायां मदुक्तकल्पनायाम् । एतादृशीमवतारभूतां राजविशेषव्यक्तिमनुलक्ष्यैवोक्तम्—

नारायणादृते नान्यो वसुमत्याः पतिर्भवेत् ।
नारायणांशजो राजा मनुष्यो न कदाचन ॥

इति । तेन नातिप्रसङ्गः शिवभारतोतिहासोक्तं चानुगृहीतं भवतीति सर्वं समञ्जसमित्यास्तां तावदियं भाविकजनमनोहारिणी शिवराजावतारविचारसरणिः ।

एवमस्य चरित्रस्य प्रधानपुरुषः श्रीमाञ्छत्रपतिः शिवराजोऽवतार इति विविच्येदमिदानीं निरूप्यते—शिवभारतमिति ग्रन्थाभिधाने यः शिवशब्दो निवेशितः स तु युक्त एव । शिवशब्दस्य च्छत्रपतौ तत्पित्रादिभिः संकेतितत्वात् । भारतशब्दस्तु केनाऽऽशयेन प्रवेशित इति ।

भारतशब्दस्य हि भरतानधिकृत्य कृतमिति व्युत्पत्त्या भरतवंशीयराजकृतजगत्परिपालनप्रयोजनकमहापराक्रमादेर्वर्णनमर्थः । तादृशवर्णनं च भारतेतिहासनाम्ना प्रथितायां श्रीमद्वेदव्यासप्रणीतायां शतसाहस्र्यां संहितायां दृश्यत इति युक्तस्तत्र भारतशब्दप्रयोगः । अत्र तु ग्रन्थे भृशबलकुलोत्पन्नराजचरितवर्णनादयुक्तोऽयं कवीन्द्रपरमानन्दकृतो भारतशब्दनिवेश इति चेद्भ्रान्तोऽसि ।

यथा स सुगृहीतनामधेयो भरतराजश्रेष्ठः, लोकोत्तरपराक्रमशाली अपर इव वनमाली भारतकुलप्रवर्तको भारतदेशोद्धारको भारतजनपरिपालको भारतधर्मसंस्थापकश्चाऽऽसीत्तथाऽयमपि शिवराजश्छत्रपतिरिति द्योतयितुं कवीन्द्रेणैतच्चरिते भारतशब्दस्य योजितत्वात् । यथा पुरुषश्रेष्ठगतशौर्यादिगुणविशेषं स्फोरयितुं पुरुषव्याघ्र इति वा नरसिंह इति वा प्रयुज्यते तद्वत् ।

किं च भारतनाम्ना प्रसिद्धो निबन्धो हीतिहासलक्षणाक्रान्तत्वादितिहास इति प्रोक्तो लोके । इतिहासलक्षणं च—

धर्मार्थकाममोक्षाणामुपदेशसमन्वितम् ।
पूर्ववृत्तकथायुक्तमितिहासं प्रचक्षते ॥ इति ।

तथा च—इति—इत्येवंप्रकारकं वस्तु, ह—किल निश्चयेनेत्यर्थः । आस्ते यत्रेति व्युत्पत्त्या प्राचीनसमयसंवृत्तयत्किंचिदर्थस्य यथावस्थितत्वेन प्रकाशकमाख्यानमितिहासपदार्थः संपद्यते । यथा रामायणादि । एवं प्रकृतशिवराजचरितमपीतिहासलक्षणाक्रान्तत्वादितिहासः । इतिहासप्रामाण्यं चेतिहासशब्दार्थमहिम्नैव वादिप्रतिवाद्येतदुभयपक्षमध्यगतेन न केनाप्यनङ्गीकर्तुं शक्यम् । अर्थान्नात्र मयाऽज्ञानान्मोहात्कवित्वशक्तिविलसनाद्वा कस्यचिदपि कथांशस्य लेशतोऽपि विपर्यासः कृतः । किंतु यथावस्थितमेव वस्तु प्रदर्शितमिति भारतवदस्य सर्वात्मना प्रामाण्यमिति सूचयितुं शिवराजेतिहासविषये भारतशब्दो निर्दिष्ट इति तत्तात्पर्यम् । एतेनाध्यायपरिसमाप्तौ ' अनुपुराणे ' इत्युक्तत्वात्पुराणस्य च केषांचिन्मते प्रमाणत्वेनासंमतत्वादसत्कल्पमसिराणरियं यच्छिवराजस्तरणिरितीति वदन्तः परास्ताः । प्रकृतशिवराजचरिताख्यनिबन्धस्य, सर्गश्च प्रतिसर्गश्चेत्यादिपञ्चांशात्मकपुराणलक्षणेन सर्वात्मनाऽनाक्रान्तत्वात् । मन्वन्तरादिवर्णनस्य तत्रादर्शनात् । ननु किमर्थं तर्हि पुराणशब्दप्रयोगस्तत्रेति चेदुच्यते । यथा हि पुराणं श्रवणपठनादिना स्वोत्कर्षप्रयोजकधर्माधायकमेवमेवेदमपि शिवराजचरितं पुराणकविप्रोक्तगीर्वाण-

वाणीसरणिमनुगतं तादृशधर्माधायकमिति सूचनेन स्वतः सिद्धमितिहासप्रामाण्यमुपोद्बलयितुमिति गृहाण ।

नन्वत्र पुरुषार्थोपदेशादर्शनादितिहासलक्षणमपि न सर्वात्मनाऽवतरतीति चेन्न । अवतारपुरुषचरितस्य हि निसर्गत एवासन्मार्गनिवृत्तिपूर्वकसन्मार्गप्रवृत्तिबोधप्रदत्वेन तादृशबोधस्य चार्थोत्कर्षसाधकत्वेनार्थोत्कर्षस्य च धर्मोत्कर्षसाधकत्वेनास्येतिहासस्य परम्परया पुरुषार्थोपदेशसमान्वितत्वात् ।

इत्थं प्रौढतामापन्नोऽयमवतारपुरुषाधिष्ठितत्वाद्गीर्वाणवाणीमयत्वाच्च द्वितीय इवार्धनारीनटेश्वरः शोभते शिवराजेतिहासः । अत एव सच्चिदानन्दाधिष्ठित आनन्दाश्रममुद्रणालये लब्धोऽनेनावकाश इति युक्तमेव ।

यद्यप्ययमन्यत्र मुद्रितपूर्वस्तथाऽपि येयं शिवराजेतिहासपुस्तिकाऽस्य संस्करण आधारतयाऽवलम्बिताऽस्माभिः सेयमद्ययावदुपलब्धासु पुस्तिकासु प्रथमा प्राचीनकाललिखिता चेत्यतिजीर्णतया पत्रगतप्रकारविशेषतया क्षरलेखनसरण्या चावगम्यते । नैतावदेव किंतु शिवराजकविराजैतदुभयसमकालीनत्वं भासते तस्याः । प्रेक्षणार्थं तस्याश्छायाचित्रमप्येकं निवेशितम् । भूयांश्च भारतीयजनसमाजः सांप्रतं शिवराजेतिहासे समासक्तान्तःकरणः सन् सूक्ष्मेक्षिकया युक्तिप्रयुक्त्यादिभिस्तदीययावदर्थगतसत्यतांशपरिशोधने व्यापृतो बह्वाकुलो दृश्यते । तत्र संशोधनेऽतिप्राचीनस्य शिवराजसमकालिकस्य काव्येतिहासग्रन्थस्य महदेव सहायकं भूत्वा देशकार्यमपि कृतमेव भवेदथ च शिवराजकाले भगवती गीर्वाणवाणी नाधुनेव विवशा किंतु तरुणीव सानन्दं समुत्कर्षावस्थामनुभवन्ती गभीरतरा चाऽऽसीदित्यप्यवगतं भवेदित्यतः पुनर्मुद्रणयन्त्रमध्यारोपितोऽसौ । एतत्संस्करणं चाऽऽनन्दाश्रमस्थपण्डितैः प्रधानसंशोधकमन्तरेण सर्वैरेव कृतम् ।

सोऽयं ग्रन्थः करवीरक्षेत्रनिवासिनां श्रीमतां 'अप्पासाहेब राजोपाध्याय' इत्यभिधेयमहाभागानां विशाले पुरातनाधुनातनपुस्तकपुस्तिकादिसंग्रहे विद्यमानं प्राचीनजीर्णलेख्यपात्राणां राशिमपरमिवोदधिमालोड्योपलब्धं यच्छिवराजेतिहासस्य प्राथमकल्पिकं पुस्तिकान्तरं तदनुसारेण मुद्रितः । तदालोडनकार्यं च कलाभिज्ञपदभूषितेन देवधरोपाह्वकृष्णरायतनूद्भवदत्तात्रेयशर्मणा करवीरपुरवास्तव्येन स्वीयममूल्यं समयं व्यर्थीकृत्य महता परिश्रमेण संपादितम् । अथ च शिवचरित्रकार्यालयस्थ 'काळे' इत्युपाख्यपंतादिनकरद्वारा पुण्यपत्तनस्थभारतेतिहाससंशोधकमण्डलस्योपहारीकृतम् । तेन च महाभागेन मण्डलेनाऽऽनन्दाश्रमसंस्थायां संस्करणे सहायत्वेनोपदातुं समर्पितमिति तान्सर्वानभिनन्दये स्मरामि च मुहुर्मुहुस्तेषां कृतीरुपकृतीश्च ।

एवं संजातागमे गीर्वाणवाणीरूपेण परिणत इतिहासराजे कविराजशिवराजमहाशक्त्योः संभेदः कृष्णाकोयनयोः प्रीतिसंगम इवातीवाभिरामः पवित्रश्च संजात इति वाचनसमकालमेव प्रतीयतेऽतस्तादृशे संगमे निरन्तरमवगाहनादेवा परिमार्जयन्त्वसन्मार्गप्रवृत्ति-

# कवीन्द्रपरमानन्दकृतस्य शिवभारतस्य

## प्रस्तावना ।

यं यं लोकं मनसा संविभाति, विशुद्धसत्त्वः कामयते यांश्च कामान् ।
तं तं लोकं जयते तांश्च कामांस्तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः ।
( मुण्डक १०, १, २ उ० पृ० अ०९.१ )

श्रीमतश्छत्रपतेः शिवराजस्य चरित्रविषये बहवो ग्रन्था लेखाश्च निर्मिताः संप्रति विद्वद्भिः । स्पष्टमिदं यत्तेषां पुराणपत्राणि लिखितान्येव च प्रमाणत्वेन स्वी क्रियन्त इति। एतादृशप्राचीनलेख्यपत्राणामापेक्षिकसमृद्ध्यभावान्महाराजस्य चरित्रालोकसमये बहवो मोहकारिणः प्रसङ्गा उपातिष्ठन्ते । विशेषतः परकीयाणां दुरभिमानदोषदुष्टैर्लेख्यैरस्मदीयानामजनिष्ट प्रायो बुद्धिभेदः । भावुकतया महाराष्ट्रीयाणां हृदये यद्यपि महाराजस्य चरित्रविषये विपुलतर आदरोऽस्ति तथाऽपि पाश्चात्योद्भावितबुद्धिभेदस्य निरसने पारयितुं न शक्नोति सा महाराष्ट्रीयाणां भावुकता । अत्र परमोज्ज्वलस्य वर्तत आवश्यकता सत्येतिहासस्य। एतादृशं सत्येतिहासं सम्यक्संशोध्य परकीयैः प्रकीर्णं बुद्धिभेदं निवारयितुकामेन भारतेतिहाससंशोधकमण्डलेनातीव कृतः परिश्रमः। आविष्कृतं च शिवराजचरितम्। एवं संशोधनं कुर्वता मण्डलेन पाश्चात्यानां खण्डनेन सहैव स्वकीयानामद्भुतरम्या भावना अप्यपरिहार्यतया गत्यन्तराभावाच्च खण्डिता इति प्राप्तमेतत् । अस्मिन्कार्ये ये ग्रन्था लेखाश्चोपयुज्यन्ते तत्रेदं शिवभारतमेव प्रमुखतामापन्नम् । राज्ञा शिवेन समकालीनतां भजतां लेख्यानां ग्रन्थानां वा योग्यतेतरेभ्यः सर्वेभ्योऽप्यधिकतमाऽस्तीति नात्र संदेहः । शिवभारतस्य कर्ता परमानन्दो न केवलं शिवराजसमकालीनः किंतु तस्याऽऽश्रितः कृपापात्रमासीदिति कवीन्द्रेणैवोक्तमात्मनो ग्रन्थे । महाराजेनाऽऽदिष्ट एव व्यरचयदिमं ग्रन्थं कवीन्द्रः ।

न केवलमिदं काव्यं, यतोऽत्र चरित्रे प्रधानपुरुषाणां वृत्ते न तेनातिशयोक्तिः कृता । न कृतो विपर्यासो विजये पराभवे वा गुणदोषयोर्वा काप्युल्लङ्घ्येतिहासमर्यादामाश्रित्य वाऽद्भुतकल्पनाम् । तस्मात्सिद्धमिदमैतिहासिकमनुपुराणमिति । तथाऽपि विशेषप्रसङ्गवर्णनसमये काव्यस्फूर्तिः परमोत्कर्षतां भजते परमानन्दस्य । तथाहि—शाहनृपतेः सौन्दर्यवर्णनं, मुस्तफाखानेन स यदा बन्दीकृतस्तदा जातस्य तुमुलयुद्धस्य वर्णनं, शिवराजस्य बालक्रीडावर्णनमेवमादिषु तत्र तत्रोज्ज्वलं प्राकाशत परमानन्दस्य प्रतिभा । काव्येतिहासयोर्मेलनेन ग्रन्थोऽयमतीव हृदयंगमः संजातोऽपि नेतिहाससत्यस्याभजत किंचिन्न्यूनतां पावित्र्यं वेत्यहो आश्चर्यं कविप्रतिभायाः । संस्कृतभाषायां पुराणग्रन्थेष्वस्ति विलक्षणः काव्येतिहासयोर्व्यतिकरस्तेन प्रसिद्धप्रायमिदं यदितिहाससंशोधने संशो-

धकानां चेतः कथं खिद्यत इति । परमानन्देन त्वात्मनः काव्यमतीव चातुर्येण व्यरचि तत्काव्यसंसर्गेणेतिहासोऽयमधिकमेवाविन्दत विकासम् । अतो ग्रन्थस्यास्य पठनसमये "इतिहासोत्तमादस्माज्जायन्ते कविबुद्धयः" इति व्यासवचनं स्मर्यते सहजतया । अत्रानुपुराणेऽङ्गीकृता महाभारतस्य सरणिः । तञ्जावर उपलब्धस्य पुस्तकस्याध्यायपरिसमाप्तिसंकल्पे "शतसाहस्र्यां संहितायां" इति दृश्येते पदे । तस्य हेतुः कदाचिदेवं स्यात्—यथा महाभारते शतसहस्रश्लोका विद्यन्ते तथा शिवभारतस्यापि कर्त्रा शतसहस्रश्लोका ग्रन्थेऽस्मिन्नकारिषतेति । अवान्तरप्रमाणैर्ग्रन्थलेखैस्त्वयमभिप्रायः प्रामादिक इति सिध्येत् । प्रामादिकीयं शतसाहस्रीकल्पनेत्यत्रास्ति प्रत्यक्षप्रमाणम् । अत्र हि ग्रन्थेऽध्यायपरिसमाप्तिसंकल्पेऽध्यायशतसंहितायामिति विस्पष्टं तावद्दृश्यते । तस्माद्ग्रन्थस्यास्याध्यायशतमेव परमानन्देन संकल्पितमिति निश्चीयते । न शक्यते परिज्ञातुं यथा परमानन्दस्यायं संकल्पः सिद्धिमगान्न वेति । यथाऽयं ग्रन्थोऽपूर्णतयोपलब्धस्तथैवास्याधिष्ठानमलं प्रकाशेत । उपलभ्यमानेनानेन ग्रन्थेन राज्ञो मालवर्मणः शाहस्य च चरित्रमधुनाऽभजताभ्युपगमयोग्यताम् । आसीच्च केषांचिन्मतं यथा मालवर्मा नाम कश्चित्कर्षकोऽराजकश्चेति । तदपास्तमनेन ग्रन्थेन । मालवर्मा तु ससैन्यो माण्डलिक आसीच्चैकस्य मण्डलस्य शास्ता । अत एवाऽऽपत्काले निजामशाहेनाऽऽहूतः सहायार्थमसौ । तदिदं प्राप्तकालमिति ज्ञात्वा राज्ञा मालवर्मणाऽऽत्मनः स्वकुलस्य चोत्कर्षोऽकारि । एवमादिप्रबन्धमस्मिन्ग्रन्थे रमणीयतया वर्णयामास तत्रभवान्परमानन्दः । वर्णयित्वा च मालवर्मणस्तत्सूनोश्च शाहनृपतेश्चरित्रं तत एव शिवराजस्य वृत्तं प्रारभत । आशयस्त्वत्र शिवराजस्य पितृपितामहादयः पूर्वजाः कथमध्यासितराज्यपदाः शौर्यादिगुणशालिनश्चाऽऽसंस्तत्सम्यगवगम्यतां सर्वैरिति । भृशबलानां वंशोऽयं न शूद्रतामर्हति किंतु राजवंशोऽयं सूर्यवंशेन सह संबध्यत इति ग्रन्थकृद्व्यक्तमेवात्र ग्रन्थेऽवादीत् । विषयेऽस्मिन्प्राचीनतमपुराणसरणिमनुसरता ग्रन्थकृता न क्वाप्युल्लङ्घिता सीमैतिहासिकसत्यस्य ।

विशेषतः शिवभूपतेर्जन्मवृत्तकथनावसरे परिपूर्णतया पुराणपद्धतिमन्वसरत्परमानन्दः । भगवतो रघुनाथस्य भगवतः श्रीकृष्णस्य वा जन्मनः प्राग्यथा वसुंधरा गोरूपं धृत्वा परमात्मानं शरणं जगाम तथैव शिवराजस्य जन्मनः प्राग्विश्वंभरेयं गोरूपधारिणी सती शरणमियाय विधातारम् । म्लेच्छा वैदिकं धर्मं कथं विध्वंसन्ति तन्निवेद्य भूभारहरणं प्रति परमेष्ठिनं प्रार्थयामास सा । ब्रह्मणोक्तं मया पूर्वमेवावस्थेयं तव विनिवेदिता भगवते वासुदेवायेति । भगवता विष्णुनाऽप्यादिष्टं भृशबलवंशे शाहवर्मणो यादवनन्दिन्यामवतितीर्षुरस्मीति । अवतीर्य च स्थापयिष्यामि वैदिकं धर्मम् । तस्मात्त्वं विगतसाध्वसा सती स्वसंनिविशे सुखमास्स्व । एवं विधिना समाश्वासिता क्ष्मा स्वस्थानमा-

जगामेति । एवमादिर्विस्तरशो वर्णितः कथासंदर्भस्तत्रभवता परमानन्देन । समग्रस्यास्य कथासंदर्भस्यायमभिप्रायो यथाऽसौ शिवराजो न मनुष्यः किंत्वसाधारणतया रामकृष्णादीनां तुलामारोहतीति । प्राचीनपद्धतिमनुसृत्यावतारोऽयं साक्षाद्भगवतो विष्णोरिति ग्रन्थकृता सिद्धान्तितम् । एतावत्कालपर्यन्तं कस्यचिदप्यसामान्यस्य जीवनवृत्तान्तेऽद्भुतकल्पनामन्तरेणावतारित्वं न सेत्स्यतीति सर्वेषामेवाभून्मतिः । अतोऽमुनाऽद्भुतवर्णनेन शिवराजस्यावतारित्वं निश्चेतुमैच्छत्कवीन्द्रः । यद्यप्यत्र मन्येत भुव आत्मभुवं प्रति गमनं महाविष्णोश्चावतारग्रहणेऽनुमोदनमेतत्सर्वं कल्पितप्रायमपि तु धरया कथिता तत्कालपरिस्थितिर्या वैदिकधर्मस्य सा केवलं न कल्पिता किंतु सत्यैवाभूत् । एतादृशि विपदि शिवराजेन यल्लोकोत्तरसामर्थ्येन सर्वैरसंभाव्यतयोपेक्ष्यमाणं हिन्दवीयस्वराज्यं प्रत्यक्षमेव प्रस्थापितं तस्मादयमवतीर्णः शिवरूपेण भगवान् वासुदेव इत्यत्र नास्ति संदेहः । अनेनैव हेतुना शिवराजस्य जन्मनः प्राग्वृत्तं साद्भुतमवादीत्परमानन्दः । अद्भुतकथामन्तरेण महाराजस्य चरित्रमवतारचरित्रमिति कथं सिध्येदित्येष प्रश्नः किंचित्सविस्तरमत्र विविच्यते । यतः परमानन्देन वर्णितस्याद्भुतवृत्तान्तस्य परित्यागेन सहैवान्यासामद्भुतकल्पनानां परित्यागः कृत एव स्यात् । इदानींतनानामपि केषांचिन्मनस्येवं स्याद्यदद्भुतकल्पनामन्तरेण राजा शिव ईश्वरांशेनावतीर्णः खल्वेवं वक्तुं शक्येतेति । अतोऽवश्यमेव व्याख्येयोऽसौ विषयः शास्त्रीयतया । यः खलु साधूनां परित्राणं दुष्कृतां विनाशं धर्मस्य च संस्थापनं करोति स एवेश्वरावतार इति गीतायां भगवतोक्तम् । दलत्रयात्मकमिदं लक्षणमीश्वरावतारस्य । यत्रैतानि त्रीणि दलानि दृश्यन्ते सोऽवतार इत्युच्यते । अवतार इति शब्दोऽयं नाऽऽर्षः । किंत्वर्वाचीनस्त्वसौ । आर्षेऽवतारशब्दात्प्रति संभव इति शब्दः प्रयुज्यते । महाभारतस्याऽऽदिपर्वण्यस्त्येकं संभवाख्यं पर्व । गीतायामपि "संभवामि युगे युगे" इत्युक्तं भगवता । संभवावतारयोस्तुल्यार्थकत्वादुपरिनिर्दिष्टे दलत्रयात्मके लक्षणे निर्दिष्टानां त्रयाणामपि हेतूनां पूर्त्यर्थमेव परमात्मा व्यक्तस्वरूपं स्वीकृत्य भूमण्डलेऽवतरतीत्यवतारमीमांसायास्तात्पर्यम् । अत्रावतारमीमांसायां कश्चिदंशावतारः कश्चिच्च पूर्णावतार इति विभागः कल्प्यते कैश्चिद्विद्वद्भिः । अनुपपन्नस्त्वयं पूर्णावतारस्य विचारः । परमात्मा सामग्र्येणावतरति न वा । नाऽऽद्यः । युक्तिशून्यत्वात् । पूर्णावतारदशायां जगतो मूलाधिष्ठान ईश्वरभावप्रसङ्गात् । न चावतीर्णस्य पुरुषस्य रसरक्तादयः सर्वेऽपि शरीरावयवा ईश्वरमया इति वाच्यम् । सर्वस्यापि जगत ईश्वरमयत्वादवतीर्णस्यैव शरीरमीश्वर इत्यत्र को विशेषः । द्वितीये सिद्धसाधनत्वम् । परशुरामादयःसर्वेऽप्यंशावताराः कृष्णस्तु पूर्णावतार इति चेन्न । पूर्णावतारस्यायं विचारो न शास्त्रीयतामर्हति । प्रमाणाभावात् । अत एव श्रीमदाचार्यैर्विहायेमां पूर्णावतारकल्पनां गीताभाष्यप्रस्तावे विस्पष्टं तावल्लिखितं यथा—"अंशेन

किल संबभूव भगवान् वासुदेवः " इति । अनयैव रीत्या भगवद्गीतासु विचारितोऽय.मर्थो भगवता वासुदेवेन [ गी० ४ । ६ ] । तस्मादत्राप्यवतारमीमांसावसरेऽशावतार एवाभिप्रेयत इति परिज्ञातव्यम् ।

गीतास्ववतारस्य त्रीणि निमित्तानि विद्यन्ते । अनेन निमित्तत्रयेण परमात्माऽवतरति राष्ट्रकल्याणायैव न व्यक्तिहितायेति सुनिश्चितमनुमीयते । अवतीर्णः पुरुषो संस्थापयति राष्ट्रधर्ममेव न व्यक्तिधर्ममिति रामकृष्णादीनां चरित्रेभ्योऽभिज्ञायते । यः खलु साधुपरित्राणादिषु मध्य एकमेव कार्यं पारयितुं शक्नोति स विभूतिरिति सूरिभिर्भक्तिसांप्रदायिकादयोऽत्रोदाह्रियन्ते । तैर्धर्मोपदेशमात्रेणैव जनानां विहितं हितं न साधुपरित्राणं दुष्कृतां विनाशश्च कृतः कारितो वा । अतस्ते विभूतय इत्यभिधीयन्ते । शिवराजस्योदन्ते तु त्रयोऽपि लक्षणधर्मा दृश्यन्ते । महाराजेन हि साधवः परिपालिता अफजलखानसदृशानां दुष्कृतां विनाशः कृतो महाराष्ट्रधर्मश्च संस्थापितः । तस्माच्छास्त्रतोऽपि सिद्धमिदं यच्छिवराजस्य रूपेणावतीर्णः परमात्मेति ।

शिवराजेन यानि संपादितानि महाकार्याणि यच्च विक्रान्तं यच्च संस्थापितं स्वराज्यं तत्सर्वमपि महाराष्ट्रार्थमेव न कस्मैचिद्व्यक्तिधर्मार्थम् । कलौ भविष्यति म्लेच्छप्रायं भूमण्डलमन्ते च कल्किरूपेणेश्वरावतारादनन्तरं भविष्यति च धर्मसंस्थापनमिति पुराणवादः सर्वेषां चेतसि दृढमेव संनिविष्टः । अतो हिन्दवीयस्वराज्यस्य विचारो न कस्यापि बुद्ध्या शक्यकोटिमारोढुमशक्नोत् । एवं च सति शिवराजेन प्रत्यक्षतयैव हिन्दवीयस्वराज्यं संस्थापितं तस्मात्किमत्र चित्रं यच्छिवराज ईश्वरावतार इति लोका अमन्यन्त । केनाचिदत्युत्कटेनैकेनापि सद्गुणेन नरोऽसामान्यतामवाप्नोति किमुतात्युत्कटैर्बहुभिः सद्गुणैः संपन्नः पुरुषोऽसामान्यताया अप्युच्चतम इति । मन्यते सर्वैरियमेव भूमिकेश्वरावतारकल्पनाया इति । गुणसमुच्चयस्यास्योदात्तहेतावधिष्ठाने सति शास्त्रतोऽप्यसावीश्वरावतार इति च सुतरां सिध्यति । चातुर्यं प्रतापश्चानयोर्द्वयोरेकत्र संनिवेशः प्रायेण दुर्लभतरो लोके । अनेन गुणद्वयेनालंकृताः पुरुषपुंगवा बहवः प्रसिद्धिमीयुरितिहासे । गुणेन तु सदैव चरिते तत्र दोषोऽप्युद्भूततया विभाव्यते । विदितमिदमितिहासज्ञानाम् । राज्ञः शिवस्य चरित्रे न केवलमिदं गुणद्वयं किंत्वन्येऽपि बहवो गुणा दृश्यन्ते । प्रसङ्गावहितत्वं, अव्यभिचारि परीक्षणं, अलौकिकी बुद्धिः, अप्रतिबद्धा स्फूर्तिः, इत्यादयो दिव्या गुणा एकी बभूवुरत्र । अथाप्यस्मिन् दिव्ये गुणमण्डले स्वधर्मनिष्ठा, मनःसंयमो ध्रुवा नीतिरीश्वरभावे ( स्वातन्त्र्ये ) रतिर्गुणात्मकमिदं मूर्तित्रयं व्यराजतानेनैव हेतुनेश्वरावतारोऽयं शिवराज इति सिद्धम् । तत्सिद्ध्यर्थं नापेक्ष्यतेऽद्भुतकल्पना । यद्यप्यद्भुतकल्पनयाऽभ्युपगम्यमानमवतारित्वं भावुका अभिप्रयन्ति तथाऽपि नेयं सरणिः शास्त्रेऽभिप्रेयते ।

शिवराज इव तत्पितरावप्यभिजनवन्तावास्ताम्। यद्यपि हिन्दवीयस्वराज्यं न शशाक प्रस्थापयितुं शाहवर्मा तथाऽपि संरक्षणार्थं हिन्दुजनतायाः संपादनार्थं स्वातन्त्र्यस्य च यावज्जीवं स परिश्रममकरोत्। अतुलनीयमासीच्छाहराजस्य समरधैर्यम्। शिवभारतस्य कर्त्रा परमानन्देनानेकेषु प्रसङ्गेषु तस्य समरधैर्यमतीवाश्लाघ्यत। तथैव जननी शिवराजस्याप्यासीद् धैर्यशालिनी चतुरा च। सत्सु बहुष्वपि दारेषु शाहवर्मणाऽस्या एव यादवनन्दिन्यै स्वहृदयं समर्पितमित्युक्तवानस्मिन् ग्रन्थे परमानन्दः। एकेनैवानेन हेतुना सुगृहिणीत्वं सिध्यति शिवस्य मातुः। सा यथा सौन्दर्येण संपन्नाऽऽसीत्तथैव गुणेन धैर्येण प्रत्युत्पन्नमतित्वेन च। एतेनैव तस्या वीरपत्नीत्वं वीरमातृत्वं च सेत्स्यति। पर्णालदुर्गे शिवराजे यवनेन निरुध्यमाने सति सेनानीर्नेता पालकरेत्युपनामको जिजां प्रति द्रष्टुं राजगिरौ संप्राप्तः। एकतः शास्ताखानोऽन्यतो जोहारश्चैवमुभयतोऽपि महाराष्ट्रे परैराक्रान्ते सति स्वयं शिवभूपालो निरुद्ध इव संवृत्तः। एतस्मिन्नवसरे द्रष्टुमागतेन पालकरेण सह जायमाने संभाषणे तया शिवस्य मात्रा यत्तेज आविष्कृतं तन्न केवलमार्यस्त्रीणामपि निखिलस्यापि तु स्त्रीजनस्य ललामभूतमित्यत्र न संदेहः। 'यदि विपद्यस्मिन् न यूयं प्रतिकर्तुं शक्नुथ तर्ह्यहमेव रणभूमिं गत्वा योत्स्ये यवनैः सार्धं मोक्षयिष्यामि च शिवराजम्' इत्यस्मिन् ग्रन्थे परमानन्देन तदुक्तिर्निरदिश्यत। दृष्ट्वा तां जिजाया वीरश्रियं तयाऽभ्यभवच्छौर्यशाली स नेताऽपि। आसीदीदृशी महासाध्व्यतीव तेजस्विनी च यादवनन्दिनी यस्यां भगवान् वासुदेवोंऽशेन संबभूवेति किमत्र चित्रम्।

दृढतमा निष्ठाऽऽसीन्महाराजस्य राष्ट्रीयस्वातन्त्र्ये। अनेनैव हेतुना चरि(रचि)तं तेन कर्माऽऽत्मनः। किं बहुनोक्तेन न चचाल तस्य धिषणा किंचिदपि राष्ट्रधर्माद्विवाहादिषु व्यक्तिधर्मेष्वपि। तस्य तादृगाचारेषु बुद्धिभेदः स्यात्केषांचित्। यथा भगवतो वासुदेवस्य चरितमसंगतप्रायमिति कतिचिददूरदर्शिनो मन्यन्ते, तथैव शिवचरितेऽप्यनेकेषां बुद्धिर्भिद्येत। निपुणं निरूपिते च निमित्तं धर्मसंस्थापनायाः, यथा भगवतः श्रीकृष्णस्य चरित्रेऽसंगत्यादिदोषो निवार्यते तथा शिवराजस्यापि चरिते सम्यङ्निरूप्यमाणायां स्वातन्त्र्यसंपादनबुद्धौ न कोऽपि दोषोऽधिगम्येत। न चाफजलस्य युद्धे शिवराजेन विश्वासघातः कृत इति वाच्यम्। तादृशप्रमाणाभावात्। शठे शाठ्यं विधाय शिवराजेन प्राप्तो महान्विघ्नः प्रत्यकारि। दुष्कृता सह सद्वृत्तेन न राष्ट्रधर्ममाचरितुं पारयति कश्चित्। शठेषु शठवत्कुर्यादिति न्यायेनावश्यं राष्ट्रधर्माचरणम्। अन्यथाऽशक्यः खलु राष्ट्रधर्मः संस्थापयितुम्। भगवतः श्रीहरेः शिवराजस्य च न केवलमासीत्पारकीयैर्विरोधः। परपक्षीभूतैरपि साकं स्वकीयैरनयोरवश्यंभावी समजायत विरोधः। ततः कस्मिंश्चित्समये ताभ्यामसत्यमप्याश्रीयत। तथाऽपि न तत्पापं कर्म। समयविशेषे तदसत्यमेव सत्यमिति शास्त्रकृद्भिर्निरणायि। सत्यस्य कृते कपटपटोरफजलस्य कप-

टविषयीभवने न कोऽपि पुण्यलाभः । दुष्टस्य धर्मद्वेषिणो विश्वासघातिनश्च शाठ्यमभिज्ञाय महाराजेन सोऽहन्यतैतदेव तस्य महत्पुण्याचरणमिति सिध्यति शास्त्रवचनप्रामाण्येन । तथा च महाभारते—

" यथाऽवध्ये वध्यमाने भवेद्दोषो जनार्दन ।
स वध्यस्यावधे दृष्ट इति धर्मविदो विदुः " ॥ इति ।

तथैवात्र वासिष्ठवचनम्—

" बहूनां कण्टकं यस्तु पापात्मानं सुदुर्मतिम् ।
हन्यात्प्राप्तापराधं च तस्य पुण्यफलं महत् " ॥ इति ।

तस्मान्महाराजस्योग्रस्य वा सौम्यकर्मणो हिन्दवीयस्वातन्त्र्यस्य प्रेरणयैव प्रवर्तमानत्वाद्यद्यपि तदापाततः सदोषमिव दृश्येत तथाऽपि शास्त्रदृष्ट्या पुण्यमेव तत् । स्वराज्यं संस्थापयता महाराजेन कथं धर्मः संस्थापित इति वक्तुं शक्येत । न च स्वातन्त्र्यसंपादनेन तत्सिध्यतीति वाच्यम् । स्वातन्त्र्यमिति व्यावहारिको विषयस्तत्संपादनेन राष्ट्रस्य व्यवहारतः कल्याणं भवेत् । अतश्चरितमिदं महाराजस्याग्रभूमिमध्यारूढमपि न सा धर्मसंस्थापना इति चेन्न । प्रथमं तावत्समाजस्वातन्त्र्यं कथं धर्मान्तरं भवतीति विचार्यते । चातुर्वर्ण्यसंस्थारूपं वैदिकस्य धर्मस्य प्रधानमङ्गमिति प्रसिद्धमेतत् । तत्र स्वातन्त्र्यं स्वराज्यं सत्ताऽपि च क्षात्रधर्म एवान्तर्भवति । ब्राह्मण्ये रक्षिते रक्षितः स्याद्वैदिको धर्म इति केषांचिन्मतमासीत् । परं तु तदनुभवविरुद्धमिति न प्रमाणगम्यम् । नैतादृशः प्राचीनानामृषीणामाशयः । अथापि तु ब्राह्मः क्षात्र धर्मश्चोभावेतौ परिपूर्णौ भूत्वा यदि मिथः संगच्छेयातां तदैव रक्षितः स्याद्वैदिको धर्मोऽभ्युदयं चेयादिति तेषां सिद्धान्तः । तथा च मनुः—

" नाब्रह्म क्षत्रमृध्नोति नाक्षत्रं ब्रह्म वर्धते ।
ब्रह्म क्षत्रं च संपृक्तमिहामुत्र च मोदते " ॥ इति ।

तथा च सप्रमाणमिदं सिद्धान्तितं भगवता कृष्णद्वैपायनेन महाभारते । सर्वतः समाजस्वास्थ्यस्य राजसत्तैवाधिष्ठानम् । यदा कालः पर्यवर्ततेत्युच्यते तदा कालशब्देन परिस्थितिरेवाभिधीयते । कालपरिवर्तनं नाम कोऽप्यद्भुततरः संकेत इति मन्यन्ते शास्त्रविचारपराङ्मुखाः । महाभारतकृता श्रीमता व्यासेन तु सुनिश्चितोऽत्र निर्णीतोऽर्थः । तथा च महाभारते—

" कालस्य कारणं राजा राजा वा कालकारणम् ।
इति ते संशयो मा भूद्राजा कालस्य कारणम् " ॥

तथैव शान्तिपर्वणि भीष्मवाक्ये—

" राजा कृतयुगस्रष्टा त्रेताया द्वापरस्य च ।
युगस्य च चतुर्थस्य राजा भवति कारणम् " ॥

अनेन कृतादीनामपि युगानां राजमूलत्वात्सर्वस्यापि कालस्य राजसत्तैव कारणमिति सुदृढः सिद्धान्तो भगवतः कृष्णद्वैपायनस्य । तस्माद् ब्राह्मण्ये रक्षिते रक्षितः स्याद् वैदिको धर्म इति न प्राचीनानां मन्त्रदृशां ऋषीणां संमतम् । ततो दुर्वारोऽयं ब्राह्मणस्येव क्षात्रधर्मस्य धर्मेऽन्तर्भावः । एतेन हिन्दवीयसत्तां संस्थापयता महाराजेन धर्म एव संस्थापित इति सिद्धम् । अस्मिन्धर्मकार्ये व्यक्तिमाहात्म्य( अहंकारः )मभिलाष एतादृशां दोषाणामभावान्महाराजस्य चरितं नाम धर्मसंस्थापनाया एव चरितम् । शास्ताखानप्रभृतीनां खलानां निषूदयिता महाराजो ग्लापितान् स्वधर्मनिष्ठान्महाराष्ट्रीयानरक्षत् । प्रास्थापयच्च हिन्दवीयस्वातन्त्र्यात्मना वैदिकं धर्मम् । अतः शिवराज ईश्वरावतार इति सिद्धम् । शास्त्रतो व्यवहारतश्चायमेवार्थोऽद्भुतकल्पनासहकृतः कवीन्द्रेण आत्मनो ग्रन्थे पुराणसरणिमाश्रित्य वर्णितः ।

जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥ इति ।

अवतारमीमांसावसरे भगवता मधुसूदनेनावतीर्णस्य चारित्राध्ययनमवश्यमित्युक्तम् । अयमेव न्याय इतिहासाध्ययनावश्यकतामपि द्रढयति । अत्र महाभारतम्—

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति ॥ इति ।

एतेनेतिहासाध्ययनस्याऽऽवश्यकतां प्राचीनतमैर्ऋषिभिरङ्गीकृता । संप्रति तु सिद्धान्तोऽयमाक्षिप्यते कैश्चित्पण्डितमानिभिः । स्वराज्यसंपादनमर्थार्जनं वा प्राप्तकालम् । येन राजपुरुषेभ्योऽधिकारा लभ्येरन्येन वा प्रत्यक्षमर्थार्जनं भवेत्तस्यैव विषयस्य लोके शिक्षणमावश्यकम् । प्रत्यक्षं तावन्नोपयुज्यत इतिहासाध्ययनमर्थार्जने स्वातन्त्र्यसंपादने वेतिहासस्य संशोधनं संशोधितस्य च प्रसारोऽधुना निष्प्रयोजनतामेवाऽऽपद्यते । प्राचीनोऽयमितिहासो न प्रत्यक्षं संबध्यते वर्तमानेन राजकारणेन । वाणिज्येऽपि च नोपयुज्येतेतिहासशास्त्रम् । तस्मात्कोऽयं निष्फलः प्रयास इत्याक्षेपकाणामाशयः । एवमाक्षिपद्भिर्न सम्यगधीतं समाजशास्त्रमित्यनुमीयते । क्षात्रधर्मो वाणिज्यं वा भवतु तत्र किमपि स्फुरणमापेक्षिकं स्यात् । अत्रापि तितिक्षा स्वार्थत्यागो भव्यश्च श्रेयस्काम इत्यादिसद्गुणानां संवर्धनस्याऽऽवश्यकता वर्तते । तादृग्गुणसंवर्धनाय इतिहासमन्तरेण साधनान्तरं नोपलभ्यत इति सर्वेषामनुभवः । सूक्तमभियुक्तैर्यस्य प्राचीनेतिहासो विद्यतेऽभ्युदयसंपन्नस्तदेव राष्ट्रं पुनरुज्जीवनमर्हति इतिहासशास्त्रस्याऽऽचार्यो विश्वनाथशर्मा राजवाडे इत्युपनामकः, खरे इत्युपनामको वासुदेवशास्त्री

तिलको लोकमान्यः प्राड्विवाकस्तत्रभवान्रानडे इत्युपनामको महादेवशर्मा इत्येतैर्महाराष्ट्रस्य स्फूर्तिदायिनी इतिहासात्मिका मृतसंजीविनी महाराष्ट्रं प्रति न दीयेत, तर्हि महाराष्ट्रे यत् किंचिच्चैतन्यमजानिष्ट तत्कथमपि नाभविष्यदिति बाढमुच्यते। राष्ट्रस्योन्नतिं प्रति तस्य सर्वेष्वप्यङ्गेषु, चैतन्योत्पादनमावश्यकमस्ति । विद्या, कला, पराक्रमणमर्थश्च इत्यादीनि सर्वाण्यप्यङ्गानि सममेव समुन्नतिं गन्तुमपेक्षन्ते । अतो राष्ट्रस्य राजवृत्तमिव धर्मवृत्तं समाजवृत्तं वार्तावृत्तमप्यवश्यमेवाध्येतव्यम् । शिवराजस्येतिवृत्तं सर्वतोऽतीव स्फूर्तिजनकमस्तीत्यत्र न संदेहावकाशः । अतः शिवराजचरितस्याध्ययनं सर्वेषामप्यत्यन्तं श्रेयस्करं स्यात् । यतः कर्ताऽस्यानुपुराणस्य ( शिवभारतस्य ) तत्रभवान् परमानन्दः कवीन्द्रो महाराजस्य समकालिकत्वेन प्रतिपाद्यविषये नात्यक्रामत सत्यस्य मर्यादाम् । अतोऽस्य ग्रन्थस्य पठनावसरे प्रत्यक्षमेवावलोक्यते महाराजस्य चरितमिति स्यान्मनसि पाठकानाम्। उपलब्धानां सर्वेषामपि शिवचरित्राणां मध्ये न कोऽपि शिवभारतस्यास्य तुलामधिरोहति । विशेषतस्तु श्रीमतो राजपुरोहितस्य सद्मन्यवाप्तोऽयं ग्रन्थः प्राचीनतमत्वादतीव श्लाघ्यतरः संजातः । तथा च तञ्जावरीयपुस्तकापेक्षयाऽस्य शुद्धतरत्वात्पाठकानामयमेव ग्रन्थः श्रेयान्वाचनार्थम् । तञ्जावरीयपुस्तकमवलोकयतां तत्रस्थाननेकान्दोषान्दृष्ट्वा यच्छुद्धीकरणं मनस्युपस्थितमासीत्तदेवात्र ग्रन्थेऽवलोक्य परमां ते मुदमाप्नुवन् । तस्मात्संशोधकैर्निपुणं परीक्ष्यायं ग्रन्थः सम्यक्संस्कृत इति वाचयितॄणामितिहासाध्ययनेऽत्युपकारकः संवृत्तः । अत एव करवीरस्थाः श्रीमन्तो राजपुरोहिताः संशोधको देवधरशर्मेत्यादिभिरुपकृतमिदं भारतवर्षमिति मन्यामहे ।

आनन्दाश्रमचालकमण्डलेन च प्रकाशयित्वेमं ग्रन्थं सर्वे लोका अनुगृहीता अतस्ते चालका अभजन् धन्यवादपात्रताम् । प्रस्तावस्यास्य लेखकोऽप्यहं तानानन्दाश्रमचालकान्धन्यवादं वदामि । यतस्तैर्वयमस्मिन् प्रस्तावलेखने नियोज्यानुगृहीताः स्मः। तथा चास्मत्सुहृद्भिः, आपटेइत्युपनामकैरितिहाससंशोधनैकपण्डितैर्दत्तात्रेयशर्मभिरहं प्रोत्साहितोऽस्मिन्कर्मण्यतस्तदनुग्रहमपि प्रतिक्षणं स्मरामि । यथाऽयं ग्रन्थ उपलब्धस्तथाऽस्यावशेषोऽप्युपलभ्यतामिति परमात्मानं साञ्जलिबन्धं सप्रणामं प्रार्थयित्वा विज्ञाप्यन्ते भारतीया ग्रन्थमिमं प्रेमार्द्रेण हृदयेन वाचयन्तु भवन्तोऽहर्निशमिति शम् ।

गीताधर्ममण्डलसंस्थापको गोपालसूनुर्भिडे इत्युपनामकः सदाशिवशर्मा ।

ॐ तत्सद्ब्रह्मणे नमः ।

कवीन्द्रपरमानन्दविरचितम् ।

# श्रीशिवभारतम् ।

## प्रथमोऽध्यायः ।

वन्दारुविबुधोदारमौलिमन्दारदामभिः । स्निग्धत्पदारविन्दाय गोविन्दाय नमो नमः ॥ १ ॥

कदाचित्परमानन्दशर्मा ब्राह्मणसत्तमः । तीर्थयात्राप्रसङ्गेन पुरीं वाराणसीं ययौ ॥ २ ॥

मुच्यन्ते यत्र सर्वेऽपि मुक्तिरेव न मुच्यते । यत्रोपदिशति ब्रह्म तारकं स्वयमीश्वरः ॥ ३ ॥

तत्र तीर्थविधिं कृत्वा दृष्ट्वा देवं महेश्वरम् । पुण्ये भागीरथीतीरे निषसाद स धर्मवित् ॥ ४ ॥

तं वै पद्मासनासीनं विस्फुरद्ब्रह्मवर्चसम् । वेत्तारं सर्वशास्त्राणां वित्तमध्यात्मवित्तमम् ॥ ५ ॥

पौराणिकानां प्रवरं भट्टगोविन्दनन्दनम् । एकवीराप्रसादेन लब्धवाक्सिद्धिवैभवम् ॥ ६ ॥

कवीन्द्रं परमानन्दं परमानन्दविग्रहम् । दृष्ट्वा प्रमुदितास्तत्र विप्राः काशीनिवासिनः ॥ ७ ॥

स तानुदारचरितान् प्रत्युत्थायाभिवाद्य च । पूजयामास विधिवत्संप्राप्तानतिथीनिव ॥ ८ ॥

परिवार्योपविविशुस्ते सर्वे तं द्विजोत्तमाः । शुश्रूषमाणाश्चरितं प्रथितं शिवभूपतेः ॥ ९ ॥

ततः प्रमनसः सर्वे तमूचुस्ते मनीषिणः । कर्तारं चारुकाव्यानामवतारं बृहस्पतेः ॥ १० ॥

मनीषिण ऊचुः—

यः शास्ति वसुधामेतां राजा राजगिरीश्वरः । तुलजायाः प्रसादेन लब्धराज्यो महातपाः ॥

विष्णोरंशो विशेषेण लोकपालांशसंभवः । मनस्वी सुप्रसन्नात्मा प्रतापी विजितेन्द्रियः ॥ १२ ॥

भीमादपि महाभीमः सीमा सर्वधनुर्भृताम् । धीमानुदारचरितः श्रीमानद्भुतविक्रमः ॥ १३ ॥

कृती कृतज्ञः सुकृती कृतात्मा कृतलक्षणः । वक्ता वाक्यस्य सत्यस्य श्रोता चातिविचक्षणः ॥ १४ ॥

देवद्विजगवां गोप्ता दुर्दान्तयवनान्तकः । प्रपन्नानां परित्राता प्रजानां प्रियकारकः ॥ १५ ॥

तस्यास्य चरितं ब्रह्मन्ननेकाध्यायगर्भितम् । भगवत्याः प्रसादेन भवता यत्प्रकाशितम् ॥ १६ ॥

उदारशब्दसंदर्भं भूरिभावार्थमद्भुतम् । माधुर्यादिगुणोपेतमलंकारैरलंकृतम् ॥ १७ ॥

निचितं धर्मशास्त्रार्थैरर्थशास्त्रसमन्वितम् । विश्रुतं सर्वलोकेषु पुराणमिव नूतनम् ॥ १८ ॥

समस्तदोषरहितं सहितं लक्षणैर्निजैः । तदशेषमशेषज्ञ शंस नः शंसितव्रत ॥ १९ ॥

इति वाराणसीस्थेन मण्डलेन मनीषिणाम् । प्रोक्तः प्रोवाच धर्मात्मा कवीन्द्रो वदतां वरः ॥ २० ॥

कवीन्द्र उवाच—

एकवीरां भगवतीं गणेशं च सरस्वतीम् । सद्गुरुं च महासिद्धं सिद्धानामपि सिद्धिदम् २१
प्रणिपत्य प्रवक्ष्यामि महाराजस्य धीमतः । चरितं शिवराजस्य भरतस्येव भारतम् ॥ २२ ॥
कलिकल्मषहारीणि हारीणि जनचेतसाम् । यशांसि शिवराजस्य श्रोतव्यानि मनीषिभिः ॥२३॥
योऽयं विजयते वीरः पर्वतानामधीश्वरः । दाक्षिणात्यो महाराजः शाहराजात्मजः शिवः ॥
साक्षान्नारायणस्यांशस्त्रिदशद्वेषिदारणः । स एकदाऽऽत्मनिष्ठं मां प्रसाद्येदमभाषत ॥ २५ ॥
यानि यानि चरित्राणि विहितानि मया भुवि । विधीयन्ते च सुमते तानि सर्वाणि वर्णय ॥
मालभूपमुपक्रम्य प्रथितं मत्पितामहम् । कथामेतां महाभाग महनीयां निरूपय ॥ २७ ॥
तस्येमां वाचमनघामभिनन्द्य द्विजोत्तमाः । प्रतिश्रुत्य गृहानेत्य स्वयमेतदचिन्तयम् ॥ २८ ॥
अहो कथमहं कुर्यां भारतप्रतिमं महत् । अमानुषचरित्रस्य शिवस्यैतत्समीहितम् ॥ २९ ॥
इति संचिन्तयन्तं मां चिरसुस्थिरचेतसम् । देवी भगवती साक्षात्समेत्येदमवोचत ॥ ३० ॥

देव्युवाच—

कवीन्द्र कुरु मा चिन्तामनुकूलाऽस्म्यहं तव । ममाऽऽदेशादयं राजा त्वामिदं कार्यमादिशत्॥
एवमाश्वासयन्ती मां कृपालुः कुलदेवता । चतुर्भुजा भगवती हृदयं मे समाविशत् ३२
तदाप्रभृति वाग्ब्रह्म समग्रं पश्यतो मम । जागर्त्यर्थेन सहितं रसनाग्रमधिष्ठितम् ॥ ३३ ॥
अनागतानां भावानामतीतानां च सर्वशः । साक्षात्संदर्शनेनाहममानुष इवाभवम् ॥ ३४ ॥
कृतकृत्यमथाऽऽत्मानं मन्यमानेन वै मया । कृतमेतन्महापुण्यमाख्यानमनघव्रताः ॥ ३५ ॥
यत्राऽऽस्ते महिमा शंभोर्महादेवस्य वर्णितः । दुर्वृत्तासुरमर्दिन्यास्तुलजायास्तथैव च ॥ ३६॥
धर्मस्यार्थस्य कामस्य मोक्षस्य च यथायथम् । तीर्थानामपि माहात्म्यं यत्र सम्यङ्निरूपितम् ॥ ३७ ॥
यत्र युद्धान्यनेकानि शिवस्य यवनैः सह । तेषामेव विनाशार्थमवतीर्णस्य भूतले ॥ ३८ ॥
देवानां ब्राह्मणानां च गवां च महिमाधिकम् । पवित्राणि विचित्राणि चरित्राणि च भूभुजाम् ॥ ३९ ॥
गजानां तुरगाणां च दुर्गाणां लक्षणानि च । निरूपितान्यशेषेण राजनीतिश्च शाश्वती ४०
तं सूर्यवंशमनघं कथ्यमानं मयाऽऽदितः । सर्वेऽप्यवहितात्मानः शृणुध्वं शृण्वतां वराः ४१
दक्षिणस्यां दिशि श्रीमान्मालवर्मा नरेश्वरः । बभूव वंशे सूर्यस्य स्वयं सूर्य इवौजसा ॥४२॥
महाराष्ट्रं जनपदं महाराष्ट्रः स भूमिपः । प्रशशास प्रसन्नात्मा निजधर्मधुरंधरः ॥ ४३ ॥
कमलायतनेत्रोऽसौ कमलापतिविक्रमः । शुशुभे गुणगम्भीरः प्रजारञ्जनमाचरन् ॥ ४४ ॥

स पुण्यदेशे धर्मात्मा निवासं स्वमकल्पयत् । तन्वन्सौराज्यमधिकं नदीं भीमरथीमनु ॥ ४५ ॥
त्वङ्गत्तुरंगमखुरक्षुण्णभीमरथीतटः । समुद्यद्दुन्दुभिध्वानविभ्रमक्षोभितार्णवः ॥ ४६ ॥
प्रतापतापितरातिधराधिपतिमण्डलः । सह्याद्रिखण्डमखिलं बुभुजे स बली बलात् ॥ ४७ ॥
द्विषद्भिर्दुःसहः सोऽभूद्धुर्यः सर्वधनुष्मताम् । नारायणांशसंभूतो धनंजय इवापरः ॥ ४८ ॥
महावंशसमुद्भूतामुमां नाम यशस्विनीम् । उपयेमे स विधिना सावित्रीं सत्यवानिव ॥
अथासौ बहु मेने तामनुरूपगुणान्विताम् । अजो रघुसुतः श्रीमान्साध्वीमिन्दुमतीमिव ॥
प्रसादमिव पार्वत्या दत्तमात्मीयमात्मना । उमेति भूषयामास नामधेयमुमा सती ॥ ५१ ॥
अथ श्रीदसमृद्धश्रीः स तया सुदृशाऽन्वितः । समाचचार मतिमान्कृती धर्माननेकधा ५२
अग्निहोत्राणि सत्राणि यज्ञाः सुबहुदक्षिणाः । महादानान्यपि तथा राष्ट्रे तस्य सदाऽभवन् ॥ ५३ ॥
स शंभुप्रीतये शंभोर्भक्तः सागरसंनिभम् । मधुरं खानयामास तडागं शंभुपर्वते ॥ ५४ ॥
सुवर्णसानुप्रतिमान्प्रासादानुच्चतोरणान् । आरामानभिरामांश्च भूरिभूरुहभूषितान् ॥ ५५ ॥
दीर्घाश्च दीर्घिकाः स्वर्णसोपानपथभूषिताः । धर्मात्मा कारयामास प्रपाःशालाश्च भूरिशः ॥
तमन्वगात्सुमहती चतुरङ्गा पताकिनी । महासत्त्वं महासत्त्वा स्वर्णदीव भगीरथम् ॥ ५७ ॥
तमुन्नतं नमन्ति स्म सामन्ताः पृथिवीभृतः । समीरणसमुद्वेलं वञ्जुला इव वारिधिम् ॥ ५८ ॥
एतस्मिन्नेव समये दुर्गं देवगिरिं श्रयन् । निजामशाहो धर्मात्मा पालयामास मेदिनीम् ॥ ५९ ॥
तमसेवन्त सततं यवनानामधीश्वरम् । सर्वे यादवराजाद्या दाक्षिणात्याः क्षमाभुजः ॥ ६० ॥
तदा येदिलशाहोऽपि पत्तने विजयाह्वये । निवसन्राज्यमकरोद्यवनो यवनैर्वृतः ॥ ६१ ॥
अथ केनापि कालेन निमित्तेन बलीयसा । येदिलेन निजामस्य विरोधः सुमहानभूत् ॥ ६२ ॥
तदा तं मालभूपालं कालं प्रतिमहीभृताम् । श्रुत्वा निजामो मेधावी साहाय्ये समकल्पयत् ॥
ततस्तस्य प्रियं तत्र कर्तुमप्रतिमद्युतिः । गत्वा देवगिरिं मालमहीपतिरुवास ह ॥ ६४ ॥
अथ विठ्ठलराजोऽस्य भ्राता भीमपराक्रमः । समेतः स्वपताकिन्या भेजे धारागिरीश्वरम् ॥ ६५ ॥
प्रीतात्मा च निजामोऽपि निजमन्तिकमागतौ । तावुभौ पूजयामास सामदानेन भूयसा ॥ ६६ ॥
ये ये निजामशाहस्य प्राभवन्परिपन्थिनः । तांस्तानुत्सादयामास मालवर्मा महाभुजः ६७ ॥
तथा विठ्ठलराजोऽपि निजामस्य चिकीर्षितम् । सहायीभूय सततं चक्रे शक्रपराक्रमः ॥ ६८ ॥
यद्यप्यासन्निजामस्य सहायास्तत्र भूरिशः । तथाऽपि मालवर्मैव सर्वेभ्योऽभ्यधिकोऽभवत् ॥
कुलक्रमागतं राज्यं निधाय निजमन्त्रिषु । दत्तं निजामशाहेन देशमन्यं शशास सः ॥ ७० ॥
अथ तस्य सभार्यस्य सुतजन्मसमुज्ज्वलाम् । श्रियं समीहमानस्य दिनानि सुबहून्ययुः ॥
संतानार्थी स नृपतिर्धर्मपत्नीसमन्वितः । देवदेवं महादेवमाराध महाव्रतः ॥ ७२ ॥

अथ कालेन महता देवी तस्य महौजसः । आनन्दयन्ती दयितं ससत्त्वा समजायत ॥७३॥
ततः सा दशमे मासि प्रस्फुरद्राजलक्षणम् । सुमुखं शुभवेलायां सुषुवे सुतमद्भुतम् ॥७४॥
सुनसं सुविशालाक्षं सुभालं श्लक्ष्णकुन्तलम् । विस्तीर्णवक्षसं दीर्घभुजमानद्धकंधरम् ॥७५॥
सुवर्णवर्णमरुणस्निग्धपाणिपदाम्बुजम् । प्रोद्भासयन्तं भवनं प्रभूतेन स्वतेजसा ॥ ७६ ॥
तं दृष्ट्वा मुदितास्तत्र धात्र्यः संजातसंभ्रमाः । राज्ञे निवेदयामासुर्जनैः शुद्धान्तवासिभिः ७७
ततस्तमुत्सवं श्रुत्वा सुतजन्मसमुद्भवम् । पीयूषवर्षसंसिक्तप्रतीक इव सोऽभवत् ॥ ७८ ॥
ततः समुत्सुकोऽभ्येत्य नृपतिर्द्रुतमाप्लुतः । आननं सुकुमारस्य कुमारस्य व्यलोकत ॥७९॥
अथ प्रमुदितस्तत्र समेतः स्वपुरोधसा । चकार जातकर्मास्य स्वस्तिवाचनपूर्वकम् ॥८०॥
जाते राजकुमारेऽस्मिन्कुमारसमतेजसि । नेदुर्मङ्गलवाद्यानि ननृतुर्वारयोषितः ॥ ८१ ॥
वरेण स्निग्धतारेण जगुर्गीतानि गायनाः । पेठुश्च प्रथितामुच्चैर्बन्दिनो बिरुदावलिम् ॥८२॥
अमोघाभिस्तथाऽऽशीर्भिरभ्यनन्दन्द्विजोत्तमाः । गृहे गृहे विशेषेण ववृधे स महोत्सवः ॥८३॥
महामुक्ताः प्रवालानि रत्नालंकरणानि च । स्वर्णानि स्वर्णवासांसि गास्तुरंगान् गजानपि ॥
जनाय याचमानाय ददानः स तदा प्रभुः । ददृशे मनुजैः साक्षात्कल्पद्रुम इवापरः ॥८५॥
अथ मौहूर्तिकादिष्टे विध्युक्तेऽहनि शोभने । पिता चक्रे कुमारस्य नाम शाह इति स्वयम् ॥
दिने दिने स ववृधे शिशुः सरसिजाननः । पित्रोः संवर्धयन्स्वाभिर्लीलाभिर्लोचनोत्सवम् ॥
अथ वर्षद्वयेऽतीते द्वितीयमपि नन्दनम् । लेभे महीपतेः पत्नी मूर्तिमन्तमिवोत्सवम् ॥८८॥
तस्य जातस्य हि विधिं संविधाय बुधैःसह । शरीफ इति सिद्धोक्तं नामधेयं व्यधाद्विभुः ॥
तौ शाहश्च शरीफश्च सिद्धनामाङ्कितावुभौ । ववृधाते श्रिया सार्धं कुमारौ कुलदीपकौ ९०

अथ समुदितराजलक्षणाभ्यां मुदितमनाः स्वजनान्वितः स ताभ्याम् ।
नृपतिकुलवतंसमात्मवंशं भुवमधिपल्लवितं प्रभूय मेने ॥ ९१ ॥
कथितमिति मया जगत्प्रतीतं शुभमिह राजकुमारजन्म तावत् ।
कलिकलुषहरं निशम्य धीमाननुभवति स्वसमीहितानि सद्यः ॥ ९२ ॥

इत्यनुपुराणे सूर्यवंशे निवासकर कवीन्द्रपरमानन्दप्रकाशितायामध्यायशतसंमितायां वैयासिक्यां संहितायां कुमारप्रभवो नाम प्रथमोऽध्यायः

---

## अथ द्वितीयोऽध्यायः ।

प्रपेदे पञ्चमं वर्षं शरीफस्याग्रजो यदा । तदा महोदारकर्मा मालवर्मा महीपतिः ॥ १ ॥

महत्या सेनया सार्धं दधानोऽभ्यर्हितं धनुः । प्रस्थापितो निजामेन समरायेन्दरापुरम् ॥
तत्रात्यर्थं युध्यमानः सबलैरभियायिभिः । प्रभूतैः परिधीभूतैर्हन्यमानः समन्ततः ॥ ३ ॥
पदातिमत्तमातङ्गहयकीलालवाहिनीम् । प्रवर्त्यातीव महतीं तीव्रवेगां तरङ्गिणीम् ॥ ४ ॥
कृतान्त इव संक्रुद्धः समृद्धः स्वेन तेजसा । पुरोधाय प्रतिभटान्प्रययावमरावतीम् ॥ ५ ॥
वज्रपातमिवाऽऽकर्ण्य तमुदन्तमुमा सती । पपात वाताभिहता कदलीव महीतले ॥ ६ ॥
दिनेश्वरेण विधुरा दिनश्रीरिव सा तदा । बतावलम्बरहिता मज्जति स्म तमोम्बुधौ ॥ ७ ॥
अथ विठ्ठलराजस्तां भ्रातृभार्यां तथाविधाम् । भर्तृशोकभराक्रान्तां क्रन्दन्तीं कुररीमिव ॥ ८ ॥
समाधातुमनास्तत्र क्षरद्बाष्पेक्षणः स्वयम् । निजगाद महाबुद्धिर्गद्गदस्वरया गिरा ॥ ९ ॥
विद्ध्यनित्यमिमं लोकं शोकं त्यज महाशये । पतिस्तव गतः स्वर्गं स्ववर्गं परिमुच्य वै ॥
एष वै प्रार्थितः पन्थाः शूराणामनिवर्तिनाम् । परशस्त्राभिघाताद्यन्मरणं रणमूर्धनि ॥ ११ ॥
सुधां पिपासतां सद्यः सुरलोकं यियासताम् । न नूनमात्मवर्गस्य प्रणयः स्वार्थदर्शिनाम् ॥
हा विहाय महासाध्वीं भवतीं बालमातरम् । प्रस्थितस्य परं लोकं पत्युस्ते परुषं मनः ॥
असंशयं नश्वराणि शरीराणि शरीरिणाम् । रक्षितान्यपि यत्नेन क्षीयन्ते ह्यायुषः क्षये ॥
बतैतदगदंकारैरुपचीर्णमनामयम् । मृदुचीनैः समीचीनैः सिचयैः परिधापितम् ॥ १५ ॥
हृद्यैर्हितावहैर्वृष्यैश्चोष्यादिभिरनेकधा । लघुभिः स्निग्धमधुरैराहारैरुपचायितम् ॥ १६ ॥
कालागुरुक्षोदलिप्तधूपवर्तिसुधूपिते । रम्ये हर्म्यतले दीव्यन्मणिदीधितिदीपिते ॥ १७ ॥
शिरीषपुष्पमृदुले शयनीये सुशोभने । शायितं नीरशिशिरोशीरव्यजनवीजितम् ॥ १८ ॥
सुन्दरीभिः शयाम्भोजसंवाहितपदं पुनः । बहूपकृतमत्युच्चैर्यत्नेन धृतमात्मना ॥ १९ ॥
कृतघ्नतामिव दधद्वपुरन्तमये वपुः । नानुयाति जगत्यस्मिन् तस्मात्कश्चिन्न कस्यचित् ॥
कलत्राण्यनुकूलानि पुत्राश्च कृतलक्षणाः । तौ मातापितरौ तद्वद्भ्रातरः सोदरा अपि ॥ २१ ॥
मित्राणि शत्रवश्चापि संपदो विपदोऽपि च । भवन्ति तावदेवास्य यावदस्ति कलेवरम् ॥ २२ ॥
एष शाहः शरीफश्च तव देवि सुतावुभौ । तेजास्विनौ विराजेते पुष्पवन्ताविवोदितौ ॥ २३ ॥
आभ्यां वंशावतंसाभ्यां भविष्यत्युज्ज्वलं यशः । सर्वस्मिन्नपि संसारे वीरमातुस्तवाद्भुतम् ॥
क्षीरकण्ठाविमौ वत्सौ बत त्वन्मयजीवितौ । मनागपि जगत्यत्र त्वां विना स्थास्यतः कथम् ॥
तस्मात्त्वं बिभृहि प्राणांस्त्राणार्थमनयोर्द्वयोः । दधती धैर्यमधुना वचनेनामुना मम ॥ २६ ॥
इति विठ्ठलराजस्तां पर्याश्वासयदात्मनः । स्थित्यर्थमन्ववायस्य राज्यस्य च विशेषतः ॥
दत्तदृष्टिस्तु सा देवी वात्सल्यात्तनयद्वये । अपास्य शोकमनघा बभार बत जीवितम् ॥
महान्तमपि तं शोकं निगृह्य स महामतिः । अकारयद्विधिं भ्रातुः सकलं पारलौकिकम् ॥
ततः शाहं शरीफं च पुरस्कृत्य प्रतापिना । चक्रे विठ्ठलराजेन राज्यं तदखिलं स्थिरम् ॥

निशम्यैतन्निजामोऽपि निधनं मालवर्मणः । पक्षहीनामिव निजां बत मेने पताकिनीम् ॥ ३१ ॥
ततः शाहशरीफाह्वौ मालवर्मसुतावुभौ । समं विठ्ठलराजेन समानाय्य महामनाः ॥ ३२ ॥
सान्त्वयित्वा स्वयं दत्त्वा ताभ्यां तत्पितृवैभवम् । सत्कृत्य हेमाभरणैर्वासोभिश्च मनोहरैः ॥
अनर्घ्यमणिमालाभिस्तथा च गजवाजिभिः । विसृष्टवान् गृहानेतौ तुष्टो धारागिरीश्वरः ॥
अथ तेन पितृव्येण परिपालितयोस्तयोः । वपुषी बाल्यसंपृक्ते परां पुपुषतुः श्रियम् ॥
प्रशस्तलक्षणोपेते निकेते सर्वसंपदाम् । सोदरेऽथ शरीफस्य राजशब्दो व्यराजत ॥ ३६ ॥
तं बालमपि भूपालमणयः सर्व एव ते । मानयन्तो नमन्ति स्म महाभुजमुमात्मजम् ॥ ३७ ॥
ततः शरीरं शाहस्य प्रविष्टे नवयौवने । ससंबाधेव शिशुता संचुकोच शनैः शनैः ॥
करिपोतमिवोदञ्चन्मदराजिविराजितम् । व्यक्तीभवन्नवश्मश्रुलेखं लेखमनोहरम् ॥ ३९ ॥
सुवर्णविस्फुरद्वर्णमाकर्णायतलोचनम् । कृतकीरकुलत्रासनासावंशमनोहरम् ॥ ४० ॥
कलाधरतिरस्कारिमनोहारिमुखं पुनः । जानुपर्यन्तविश्रान्तभुजमद्भुतविग्रहम् ॥ ४१ ॥
दानवीरं दयावीरं युद्धवीरं महौजसम् । मालभूपसुतं शाहं वरलक्षणलक्षितम् ॥ ४२ ॥
दृष्ट्वा यादवराजेन राजराजसमश्रिया । दिष्टे दैवज्ञसंदिष्टे विशिष्टेऽभिमतैर्ग्रहैः ॥ ४३ ॥
कुलकन्या कुले धन्या कन्या कुवलयेक्षणा । दत्ता सदक्षिणा तस्मै जिजूर्विजयलक्षणा ॥
सा तं महाशयं प्राप्य बिभ्रती वपुरुज्ज्वलम् । गङ्गेव गुणगम्भीरा व्यराजत महोदधिम् ॥
स च तां प्रेयसीं लब्ध्वा पद्महस्तां भुवः श्रियम् । लावण्यवैभववतीमतीव महितान्वयाम् ॥
नितम्बप्रान्तविश्रान्तस्निग्धश्यामलकुन्तलाम् । चन्द्रार्धभ्रान्तिकृद्भालां शरासनसमभ्रुवम् ॥
सत्तामिव मनोजस्य लसत्तामरसेक्षणाम् । सुवर्णशुक्तिप्रतिमश्रुतिं सरलनासिकाम् ॥
प्रत्यग्रतरकुन्दाग्रदन्तीं शोणरदच्छदाम् । विकस्वराम्भोजमुखीं कम्बुकण्ठीं पिकस्वराम् ॥
मृणालकोमलभुजां नवाङ्कुरितयौवनाम् । व्याकोशाम्भोरुहशयां लसत्किसलयाङ्गुलिम् ॥
स्निग्धारुणनखश्रेणिं निम्ननाभिं तनूदरीम् । रम्भास्तम्भाभिरामोरूं गूढगुल्फां यशस्विनीम् ॥
राजरेखाङ्कितपदां प्रशस्तिं सर्वसंपदाम् । नानालंकारसंभारसंदब्धास्निग्धवेणिकाम् ॥ ५२ ॥
मुक्तामणिश्रेणिकान्तसीमन्तप्रान्तवर्तिना । स्फुरितारुणवर्णेन शिरःपुष्पेण शोभिताम् ॥
सुवृन्ते स्वर्णताटङ्के पर्यन्तप्रोतमौक्तिके । दधतीं दीधितिमतीं सरत्नां च ललाटिकाम् ॥
पृथुमुक्तामणिमयोदारहारमनोहराम् । रत्नमुक्ताञ्चितानेकगुच्छगुच्छार्धधारिणीम् ॥ ५५ ॥
केयूरकान्तिकिर्मीरसरत्नकरकङ्कणाम् । कृशावलग्नसंलग्नसप्तकीसंभृतश्रियम् ॥ ५६ ॥
कलहंसगतिं शिञ्जन्मणिमञ्जीरशालिनीम् । अनर्घ्यरत्नाभरणप्रसाधितपदाङ्गुलिम् ॥ ५७ ॥
सुवर्णतन्तुसंतानविलसद्वसनावृताम् । रत्नमुक्तामणिव्रातस्फुरत्कूर्पासकान्विताम् ॥ ५८ ॥

पश्यन्प्रसन्नवदनां प्रसन्नवदनः स्वयम् । सूर्यवंशमणिस्तूर्यघोषेण गृहमाविशत् ॥ ५९ ॥
समागतां समं तेन पत्या प्रश्रयसंश्रयाम् । श्रियं नारायणेनेव प्रविशन्तीं निकेतनम् ॥६०॥
संभूयाऽऽशु समेताभिः पश्यन्तीभिः सविभ्रमम् । सुभगाभिः पुरंध्रीभिः कृतनीराजनाविधिम् ॥
वन्दमानाममोघाभिराशीर्भिरभिनन्दिताम् । स्नुषामिमामथ श्वश्रूः सकौतुकमलोकत ॥६२॥
श्वश्रूशुश्रूषणपरां पतिप्रियतरोत्तराम् । शीलसंरक्षणे सज्जां लज्जां मूर्तिमतीमिव ॥ ६३ ॥
साध्वीजनाध्वमर्यादामन्वयद्वयसंमताम् । जनीं नन्दत्परिजनामभ्यनन्दन्सतीजनाः ॥६४॥
सुतां विश्वासराजस्य दुर्गां नाम्नाऽथ सद्गुणाम् । शरीफोऽपि महाबाहुर्भव्यां भार्यामविन्दत॥
सा तया च तया तन्व्या स्नुषया सेविताऽन्वहम् । विनीताभ्यां च पुत्राभ्यामुमा लेभे परां मुदम् ॥ ६६ ॥

अगणितगुणभाजो भ्रातरो तावमूभ्याम् । निरवधिकगुणाभ्यां भ्राजमानौ वधूभ्याम् ॥
सपदि निजयशोभिः शोभमानामशेषान् । भुवमपि जनयित्रीं नन्दयामासतुः स्वाम् ॥ ६७

सार्धं तेनानुजेनाप्रतिहतगतिना मारुतेनेव शुष्मा ।
भीष्मादत्युग्रकर्मा युधि युधि विजयी विश्रुतः शाहवर्मा ॥
कुर्वन्नित्यं निजामप्रियमतुलबलः कालकोदण्डपाणिः ।
सर्वेषां पार्थिवानां पृथुरिव पृथिवीवासवः शासकोऽभूत् ॥ ६८ ॥

इत्यनुपुराणे सूर्यवंशे निवासकरपरमानन्दकवीन्द्रप्रकाशितायामध्यायशतसंमितायां वैयासक्यां संहितायां शाहशरीफपरिणयो नाम द्वितीयोऽध्यायः ॥ २ ॥

## अथ तृतीयोऽध्यायः ।

कवीन्द्र उवाच—

अथ विठ्ठलराजे स्वे पितृव्येऽपि दिवंगते । नृपनीतिविधिज्ञेन मातुर्वचनवर्तिना ॥ १ ॥
महावीरेण धीरेण शाहराजेन धीमता । राज्यभारः स हि महान्दध्रे बत निजे भुजे ॥ २ ॥
संभः खेलश्च मल्लश्च मम्बो नागश्च पर्शुकः । त्र्यम्बकश्चापि कक्कश्च भ्रातरःसोदरा अमी ॥
पुत्रा विठ्ठलराजस्य सुत्रामसमविक्रमाः । मालभूपात्मजौ शाहशरीफौ च प्रभाविणौ ॥ ४ ॥
एते क्षोणिजये सक्ताः शक्ताः समरकर्मणि । निजामस्य प्रियकराः कराकृष्टशरासनाः॥५॥
पर्वतप्रांशुवपुषः सहस्रांशुसमत्विषः । भूयसा भुजसारेण भूरिणाऽभिजनेन च ॥ ६ ॥
सैन्येन च गुणैश्चान्यैरनन्यसमतेजसः । परं न गणयामासुरम्बरस्य मते स्थिताः ॥७॥

एकदाऽन्तःपुरादासभृत्यामात्यनिषेवितम् । निजामशाहमास्थानीमेत्य सिंहासने स्थितम् ॥
दृष्ट्वा यादवराजाद्याः प्रणिपत्य यथाक्रमम् । प्रचलन्ति स्म तरसा सर्वे स्वं स्वं निवेशनम् ॥
ततः प्रचलतां तेषामन्योन्यस्पर्धिचेतसाम् । संमर्दः सुमहानासीदास्थानीतोरणाद्बहिः ॥१०॥
तत्र वेत्रधरैर्द्वारादुत्सारितजनाः पुरः । परिपीनोन्नतस्कन्धाः संनद्धाः पृथुवक्षसः ॥ ११ ॥
किरीटिनः कुण्डलिनः कवचच्छन्नविग्रहाः । मुक्तामणिमयोदारहाराः केयूरधारिणः ॥१२॥
सुलक्षणाः क्षोणिभुजः पद्मपत्रायतेक्षणाः । स्वैः स्वैः सैन्यैः परिवृताः पुरः प्रोच्छ्रयितध्वजैः ॥
हयानन्ये गजानन्ये याप्ययानानि चापरे । समारुह्याप्रतिहतप्रभावाः संप्रतस्थिरे ॥ १४ ॥
ततः खण्डागलाख्यस्य नृपस्याग्रेसरः करी । मर्दयन्नन्यसैन्यानि प्रचचाल बलाद्बली ॥१५॥
पदे पदेऽङ्कुशाघातैर्निषिद्धोऽपि निषादिना । स सिन्धुरः सैनिकानां चकार कदनं महत् ॥
तं मृद्नन्तमनीकानि गर्जन्तमकुतोभयम् । प्रलयाम्भोधरनिभं रोध्दुं शेकुर्न केचन ॥ १७ ॥
अथ यादवराजस्य दत्तवर्मादिभिः सुतैः । न सेहे गर्जतस्तस्य गर्जः प्रतिगजैरिव ॥ १८ ॥
ततो दत्तसमादिष्टाः सुभटास्तं मदोत्कटम् । निजघ्नुः शरनिस्त्रिंशकुन्ततोमरशक्तिभिः ॥
स भिन्नवर्मा बहुभिर्घोरकर्मा मदद्विपः । विकर्षन्पुष्करेणोच्चैः सहसा हयसादिनः ॥२०॥
करेण कांश्चिदादाय क्षिपन्कांश्चिदपातयत् । कांश्चिन्निपात्य चरणैस्तत्तलैर्निष्पिपेष च ॥
दत्तवर्माऽथ तं दृष्ट्वा स्वसैन्यस्य पराभवम् । तं दन्तिनमभीयाय हर्यक्ष इव लक्षयन् ॥२२॥
तदा तेनाऽऽतिरभसात्स बताऽऽयुधसादितः । विधुन्वानः स्वमूर्धानं रराण रणमूर्धनि ॥२३॥
ततो विठ्ठलराजस्य संभखेलावुभौ सुतौ । खण्डागलस्य साहाय्यं विधातुं समुपस्थितौ ॥२४
तौ तं लोहितलिप्ताङ्गं धातुमन्तमिवाचलम् । पर्यपालयतां तत्र दत्तराजवशं गतम् ॥२५॥
दत्तराजस्तु तं हित्वा विहस्तं मदहस्तिनम् । अनुजं प्रतिजग्राह संभराजं महाभुजम् २६
तयोः कुपितयोस्तत्र द्वंद्वयुद्धे समुद्यते । आवर्तः सुमहानासीद्योधानामभिधावताम् २७॥
हस्ताहस्ति ततो युद्धमुभयोः सेनयोरभूत् । दत्तवर्माणमभ्येते संभे जम्भारितेजसि ॥२८॥
यादवानां तदद्धाऽपि सांबन्धिकमलक्षयन् । ररक्ष पक्षं सम्भस्य भ्राता शाहमहीपतिः॥२९॥
ततश्चर्मधरस्तत्र दत्तराजः प्रतापवान् । व्यधत्त मण्डलाग्रेण परिवेषमिवात्मनः ॥ ३० ॥
तस्मिन्नाकस्मिके युद्धे शूराणां संनिपेतुषाम् । क्ष्वेडितास्फोटितभरैर्बभूवुर्बधिरा दिशः ॥
तदा स्वमण्डलाग्रेण मण्डलानि वितन्वता । ननृते तेन वीरेण रणरङ्गे महीयसि ॥ ३२ ॥
लुठत्सु वरवीराणां सकिरीटेषु मूर्धसु । असिभिः खण्ड्यमानेषु सकोदण्डेषु बाहुषु ॥३३॥
कृपाणबाणपरशुप्रासभिन्नेषु वर्मसु । शितचक्रनिकृत्तेषु सशरेषु करेषु च ॥ ३४ ॥
तुरङ्गमत्तमातङ्गपत्रिसंघातजन्मभिः । स्फुटं रुधिरधाराभिः शान्तेषु रणरेणुषु ॥ ३५ ॥

ध्वजांशुकपरीतासु समराजिरभूमिषु । शराचितशरीरेषु नरेषु निपतत्सु च ॥ ३६ ॥
तेन यादववीरेण धीरेणामित्रघातिना । संभराजं समासाद्य बिभिदे मित्रमण्डलम् ॥ ३७ ॥
तमप्रतिमकर्माणं दत्तवर्माणमाहवे । शृण्वानः संभनिहतं यादवेन्द्रः स्वमात्मजम् ॥ ३८ ॥
पुरो गच्छन्नर्धपथादतिरोषारुणेक्षणः । परावृत्तो महाराजः संभराजजिघांसया ॥ ३९ ॥
तस्मिन् रोषसमाविष्टे यादवानामधीश्वरे । सपर्वतवनद्वीपा वसुधा समकम्पत ॥ ४० ॥
असुतोऽप्यधिको येन हतो जाल्मेन मे सुतः । तमहं निहनिष्यामि करिष्यामि समीहितम् ॥
इत्यमर्षवशीभूतं श्वशुरं सुरविक्रमम् । स्वपक्षरक्षणाकाङ्क्षी शाहराजोऽभ्ययुध्यत ॥ ४२ ॥
युध्यमानममुं वीक्ष्य जामातरमरिंदमः । जघान साहसी शाहं भुजगेन्द्रसमे भुजे ॥ ४३ ॥
शाहस्तेनासिपातेन श्रयन्मूर्छां महीयसीम् । कथंचिदपि धैर्येण धारयामास जीवितम् ॥४४॥
ततः खेलं पराभूय न्यक्कृत्यान्यांश्च पार्थिवान् । निर्जित्य च निजामस्य श्यामाननमयीं चमूम्
गाढमुष्टिर्गाढमुष्टिं समुद्यम्य स यादवः । संरब्धोऽभ्यपतत्तूर्णं संभं समरदुर्जयम् ॥४६॥
ततः संभः प्रसन्नास्यः परं परिहसन्निव । अरं व्यापारयामास करं कौक्षेयके निजे ॥ ४७ ॥
तयोस्तदाऽभवद्युद्धं मिथो विस्पर्धमानयोः । साध्वसावहमन्येषां मत्तयोर्द्विपयोरिव ॥४८॥
ततोऽसिपातान् बहुशः सोढ्वा संभस्य यादवः । तं जगत्यां जितारातिरसिनैव न्यपातयत् ॥
तं सुतस्य निहन्तारं निपात्य वसुधातले । तेन यादववीरेण वैरनिर्यातनं कृतम् ॥ ५० ॥
तदा यादवराजेन महाराजेन संयति । सुते विठ्ठलराजस्य बत ज्येष्ठे निपातिते ॥ ५१ ॥
तत्र प्रतिक्रियां कांचिदपि कर्तुमशक्नुवत् । निजामस्याखिलं सैन्यमवसन्नमजायत ॥५२॥

युग्मम्—

स्वामिनाऽथ निजामेन सान्त्वयित्वा निवारिते । ते सेने प्रसभोद्वृत्ते निवृत्ते कलहान्मिथः ॥
रणाङ्गणादुपादाय वर्ष्मणी संभदत्तयोः । शोचमाने हतोत्साहं स्वं स्वं शिबिरमीयतुः॥५४॥
विषण्णमनसः सर्वे खेलकर्णादयोऽनुजाः । ततस्तमन्वशोचन्त ज्येष्ठं भ्रातरमात्मनः ॥५५॥
सुतस्य कारयामास यादवः कार्यमुत्तरम् । भ्रातुर्ज्येष्ठस्य विधिवत्खेलकर्णस्तदुत्तरम् ॥५६॥
सांबन्धिकस्य महतः सुतरां विरुद्धं स्पर्धिष्णुभिर्भृशबलैर्यदभूद्धि युद्धम् ।
तद्यादवेन सुधिया हृदि सावलेपे जानीमहे किमपि चिन्तयताऽनुतेपे ॥ '५७ ॥

इत्यनुपुराणे सूर्यवंशे निवासकरकवीन्द्रपरमानन्दविरचितायां

मध्यायशतसंमितायां वैयासक्यां संहितायामाकस्मि-

कास्कन्दनं नाम तृतीयोऽध्यायः ॥ ३ ॥

# चतुर्थोऽध्यायः ।

कवीन्द्र उवाच—

अथो विठ्ठलराजस्य पुत्रेष्वद्भुतकर्मसु । खेलकर्णप्रभृतिषु प्रभुणा पक्षपातिना ॥ १ ॥
प्रभूताभिजनं भूरिबलौघपरिवारितम् । प्रतिपक्षज्यानिपरं पविपाणिमिवापरम् ॥ २ ॥
अतीव दुर्धरतरं जानता यादवेश्वरम् । निजे हृदि निजामेन न्यधीयत परं छलम् ॥ ३ ॥
तस्य दुर्मन्त्रितं बुद्ध्वा यादवानां धुरंधरः । प्रस्थाय स महाबाहुर्दिल्लीश्वरमुपाश्रयत्॥ ४ ॥
निजामविषयं हित्वा गतो यदुपतिर्यदा । येदिलोऽन्तरमासाद्य तदेव मुमुदे तदा ॥ ५ ॥
स हि पूर्वं निजामेन पराभूतः पदे पदे । तदा ताम्राधिपतिना सार्धं संधिं स्वयं व्यधात् ॥
चिरस्पर्धी निजामस्य दिल्लीपतिरुदारधीः । येदिलस्योहितं सद्यः प्रतिजज्ञे प्रतापवान् ॥७॥
जहानगीरस्ताम्राणामधिपस्तीव्रविक्रमः । इभरामहितार्थाय प्रजिघाय पताकिनीम् ॥ ८ ॥
तां वै ताम्राननमयीं प्रतिपद्य पताकिनीम् । येदिलस्तृणयामास निजामं निजवैरिणम् ॥ ९ ॥
ततः शाहनरेन्द्रेण शरीफेण च धन्विना । खेलकर्णेन वीरेण वर्णनीयगुणाश्रिया ॥ १० ॥
बलिना मल्लराजेन राज्ञा मम्बाभिधेन च । नागराजाह्वयेनापि नागराजसमौजसा ॥ ११ ॥
तथा परशुरामेण त्र्यम्बकेण च भूभृता । कक्काख्येनापि संग्रामविख्यातभुजतेजसा॥ १२ ॥
चाहुबाणेन हम्मीरराजेन विजितद्विषा । मुधाभिधेन च फलस्थानाधिपतिना तथा ॥ १३ ॥
नृसिंहराजप्रमुखैर्निषादैः समरोन्मुखैः । तैरेवान्यैश्च बहुभिर्बल्लाळात्रिपदादिभिः ॥ १४ ॥
तथा विठ्ठलराजेन काण्टिकेनानुभाविना । दत्ताजीनागनाथेन मम्बेन च यशस्विना ॥१५॥
द्विजातिना नृसिंहेन पिंगळोपाभिधाभृता । जगदेवतनूजेन सुन्दरेण च भूभुजा ॥ १६ ॥
तथा सारथिना खानयाकुतेनाभिमानिना । मनसूरेण शूरेण सुरूपेणोग्रकर्मणा ॥ १७ ॥
तथा जोहरखानेन हमीदेन च दर्पिणा । आतसेन च वीरेण हुताशनसमात्विषा ॥ १८ ॥
बर्बरेणाम्बरमणिप्रतापेनाम्बरेण च । तत्सुतेनोग्रगतिना फत्तेखानेन मानिना ॥ १९ ॥
सुतैरामदखानस्य तथाऽतिगुणविश्रुतैः । अन्यैरपि महासैन्यैः समन्तादभिरक्षितः ॥ २० ॥
विद्विषद्वृन्दविध्वंसी स्वबाहुबलदर्पितः । परं न गणयामास निजामो ज्वलनोपमः ॥२१॥
येदिलः स तु दिल्लीन्द्रं सहायं समुपाश्रयन् । स्वयं निजामशाहेन सार्धं योद्धुमथैहत॥२२॥
जलालश्च जहानश्च खञ्जीरश्च सिकन्दरः । करमुल्लाखलेलश्च सुजानश्च हि सामदः ॥ २३ ॥
एते बहादुरयुता म्लेच्छाः सर्वे प्रतापिनः । राजा दुदाभिधानश्च संपरायपरायणः ॥ २४ ॥
उदारामश्चाग्रजन्मा ख्यातः क्षात्रेण कर्मणा । दादाजी विश्वनाथश्च भारद्वाज इवाऽऽजिषु ॥
राघवश्चाचलश्चापि जसवन्तबहादुरौ । एते यादवराजस्य सुता स च महाभुजः ॥ २६ ॥

सर्वे लश्करखानेन सेनाधिपतिना समम् । दिल्लीन्द्रेणाभ्यनुज्ञाताः संप्राप्ता दक्षिणां दिशम् ॥
अव्याहताशुगमनाः पवना इव पुष्करम् । आचक्रमुर्निजामस्य नीवृतं कृतविक्रमाः ॥२८॥
मुस्तफाख्यो मसूदश्च फरादश्च दिलावरः । सरजायाकुतश्चापि खैरतश्च तथाऽम्बरः ॥२९॥
अङ्कुशश्चेति यवना अन्येऽप्यतुलविक्रमाः । इभरामस्य बहवः सुहृदश्चानुजीविनः ॥३०॥
द्विजन्मा ढुंढिनामा च तज्जातिश्चापि रुस्तुमः । घाण्टिकाद्याश्च बहवो महाराष्ट्रा महीभुजः
मुल्लामहंमदं नाम पुरस्कृत्य प्रभाविणम् । येदिलानीकपतयोऽप्यथाऽऽजग्मुर्यथाक्रमम् ॥३२॥
अथ ताम्रानुत्तरतस्तथा दक्षिणतः परान् । अभियातानभीयाय निजामप्रहितोऽम्बरः ॥३३॥
तं पर्यवारयंस्तत्र शाहवर्मादयो नृपाः । तारकासुरसंग्रामे महासेनमिवामराः ॥ ३४ ॥
ततोऽभूद्भैरवं युद्धमम्बरस्य परैः सह । पिशाचभूतवेतालनिशाचरसुखावहम् ॥ ३५ ॥
धावद्धयखुरोद्धूतधूलिधूसरमण्डलः । चण्डांशुरन्वभूद् व्योम्नि तदा घनघटावृतिम् ॥३६॥
श्रेणी धरणिरेणूनां भृशमभ्रंकषा बभौ । निःश्रेणिरिव वीराणां सद्यो द्यामारुरुक्षताम् ॥३७॥
हेषाभिरथ वाहानां कुंजराणां च गर्जितैः । सिंहनादेन वीराणां भेरीणां निनदेन च ॥३८॥
शरासनानां सज्जानां टंकारेण महीयसा । स्फुरन्तीनां पताकानां मर्मरेण च भूयसा ॥३९॥
घनगम्भीरकण्ठानां पाठैश्च जयबन्दिनाम् । प्रसभं प्रतिदध्वान परिपूरितमम्बरम् ॥ ४० ॥
प्रधावतामथान्योन्यं शूराणां शस्त्रधारिणाम् । पदाघातेन महता शतधा वसुधाऽभवत् ॥
हन्तालक्षितसंपातैर्निशातैर्नतपर्वभिः । शरैः शिरांस्यपात्यन्त योधिभिः प्रतियोधिनाम् ॥
शोणितक्लिन्नकेशानि तत्र शोणेक्षणानि च । दष्टाधराणि शूराणां शिरांसि क्षितिमाययुः ॥
दन्तावलानां दन्तेषु दम्भोलिदृढमूर्तिषु । योधानां गाढमुष्टीनां निपेतुर्गाढमुष्टयः ॥ ४४ ॥
असिना प्रतियोद्धारं विधाय सपदि द्विधा । निपपात क्षणादूर्ध्वमपमूर्धकलेवरम् ॥ ४५ ॥
किरन्तो रुधिरं भूरितरं सह मदाम्भसा । बभुः शरशताविद्धतटाः करटिनां कटाः ॥४६॥
नराश्वकरिकीलालमयीं वीचिमतीमनु । महानिद्रां महावीराः श्रान्ता इव सिषेविरे ॥४७॥
कृतहस्तैः कुन्तहस्तैर्वीरैर्विध्वस्तसादिनः । भूरिसंरम्भसंतप्ताः सप्तयः परिबभ्रमुः ॥ ४८ ॥
ततः शाहशरीफाभ्यां खेलेन च महौजसा । श्यामाननैश्च यवनैरम्बरप्रियकारिभिः ॥४९॥
तथा हम्मीरराजाद्यैर्महावीरैः प्रतापिभिः । क्षुरप्रचक्रनिस्त्रिंशकुन्तपट्टिशपाणिभिः ॥५०॥
हन्यमानमशेषेण ताम्राननबलं महद् । रयाद् भयातुरं भेजे जिजीविषु दिशो दश ॥५१॥
अथापयातामालोक्य तां वै ताम्रपताकिनीम् । येदिलस्यापि पृतना कान्दिशीकतमाऽभवत् ॥
मत्तैर्दन्तावलैर्दृप्तस्ताम्रास्यो मनचेहरः । द्रवतस्तस्य सैन्यस्य स्वयं पार्ष्णिग्रहोऽभवत् ॥५३॥
तमन्तरा स्थिरं दर्पादन्तरायं जयश्रियाम् । पुरः पन्थानमावृत्य स्थितं विन्ध्यमिवापरम् ॥

दृष्ट्वा शाहशरीफाद्याः सर्वे भृशबलान्वयाः । चक्रिरे विक्रमपराः संप्रहर्तुमुपक्रमम् ॥५५॥
महामहीधराकारकरिप्राकारवर्तिना । तेन ते समयुध्यन्त गुरुगर्वेण वर्मिणः ॥ ५६ ॥
भ्रामयन् भल्लमभ्रान्तस्तीव्रमभ्रान्तमानसः । तज्जघान गजानीकं शरीफः संगरोद्धतः ५७
त्रिशूलकाण्डकोदण्डगदापरिघधारिणः । तमभ्यायिनं धीरं रुरुधुर्गजयोधिनः ॥ ५८ ॥
तं युध्यमानमभितः क्रुध्यन्तमभिमानिनम् । शरीफं पातयामासुस्ततस्ते निशितैः शरैः ॥५९॥
तस्मिन्नवरजे वीरे विध्वस्तपरकुंजरे । सपत्नशरनिर्भिन्ने गते वीरगतिं प्रति ॥ ६० ॥
तरसा खेलकर्णाद्यैर्भ्रातृभिः परिवारितः । शाहः क्रुद्धोऽभिदुद्राव ससैन्यं मनचेहरम् ॥ ६१ ॥
ततः प्रासवरत्रासपराहतमदद्विपः । प्रतापी ताम्रवदनः स पराचीनतां ययौ ॥ ६२ ॥
अपक्रामति संग्रामात्तस्मिन्नच्छिन्नकुंजरे । सैनिकास्तु निजामस्य सिंहनादान् वितेनिरे ॥
तदोदीचीमपाचीं च प्राचीमपि च रंहसा । संश्रित्य विद्रवन्ति स्म ते निजामस्य विद्विषः ॥
ततः प्रसन्नमनसः शाहराजादयो नृपाः । द्रवतस्ताननुद्रुत्य सर्वान्निजगृहुर्बलात् ॥ ६५ ॥

रयादथाऽऽनीय रणप्रचण्डान् प्रसह्य संदानितबाहुदण्डान् ।
ताम्राननेकानपरांश्च वीरान् चक्रुः समुद्याऽऽशु पुरोऽम्बरस्य ॥ ६६ ॥
इति जितरिपुरम्बरः प्रतापी भृशबलबाहुबलावलम्बनेन ।
पटहरवविमिश्रतूर्यघोषैः सपदि जगाम निजामदर्शनार्थम् ॥ ६७ ॥
दिल्लीन्द्रस्य प्रतापाद्भुतविभवभृतः सैन्यमन्यैरजय्यं
सद्यस्तद्येदिलस्याप्यतुलबलमथोज्जासयित्वा जवेन ।
बन्दीकृत्योरुदर्पानपि च युधि चमूनायकानुग्रकर्मा
सेनानीरम्बरोऽसौ भृशबलसहितस्तं निजामं ननाम ॥ ६८ ॥

इत्यनुपुराणे सूर्यवंशे निवासकरकवीन्द्रपरमानन्दविरचितायामध्यायशतसंमितायां वैयासक्यां संहितायां निजामप्रकर्षो नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः ।

कवीन्द्र उवाच—

अथ विठ्ठलराजस्य खेलकर्णादयः सुताः । धीरेण धर्मराजेन धृतराष्ट्रात्मजा इव ॥ १ ॥
प्रसभं शाहराजेन स्पर्धमानाः पदे पदे । द्विषन्त इव विद्वेषं दायादत्वाददर्शयन् ॥ २ ॥
ते मन्त्रिणं निजामस्य म्लेच्छमम्बरनायकम् । स्वशेमुषीविशेषेण वशीकृतमहीतलम् ॥ ३ ॥

श्रयणीयं संश्रयन्तः स्पृहयन्तः श्रियेऽन्वहम् । न सेहिरे महाबाहुं शाहं सूर्यसमौजसम् ॥
तमन्तर्भेदमुद्भूतमात्मीयकुलसंभवम् । परिज्ञायेङ्गितज्ञेन सुधिया शाहवर्मणा ॥ ५ ॥
तमम्बरं निजामं च दायादांस्तांश्च दुर्मदान् । पटुनाऽऽत्मप्रतापेन न्यक्कृत्य निकृतिस्थितान् ॥
स्वीयसैन्यसमेतेन निकेतेन जयश्रियाम् । महासंनाहयुक्तेन महोत्साहेन मानिना ॥ ७ ॥
स्कन्धविन्यस्तकुन्तेन शकुन्तेशानशक्तिना । आनीयताचिरेणैव निजदेशःसदेशताम् ॥८॥
तं प्रस्थितं प्रभावेण स्थितं जनपदे निजे । नैव मन्त्री निजामस्य वशीकर्तुं शशाक सः ॥
तदा तेन विना तिग्मद्युतिनेव द्युमण्डलम् । अपि प्राज्यं निजामस्य राज्यं तन्न व्यराजत ॥ १० ॥
येदिलस्तमथोद्वीक्ष्य भेदयोग्यमनेहसम् । अमुं शाहं महाबाहुं महोत्साहं महाशयम् ॥
साहाय्यार्थं समानाय्य महाभृत्यैर्महामतिः । स्पर्धी निजामशाहस्य स्वं दुर्धर्षममन्यत ॥
येदिलस्तमथाऽऽसाद्य दवानल इवानिलम् । ववृधे वैरिसैन्यानि विपिनानि विनिर्दहन् ॥
तपन्नात्मप्रतापेन परितस्तपनोपमः । स जिगाय महाबाहुरुदारग्रहमम्बरम् ॥ १४ ॥
गतिमुत्कर्षिणीं बिभ्रत् प्रभञ्जन इव द्रुमम् । बद्धमूलं निजामस्य भुजदम्भं बभञ्ज सः ॥
ततस्तेनेभरामेण तस्मै विध्वस्तविद्विषे । मन्ये संतुष्य शाहाय निजमर्धपदं ददे ॥ १६ ॥
विरुद्धमिभरामस्य समृद्धजनसेवितम् । मुधाभिधं फलस्थानपुराधिपतिमुद्धतम् ॥ १७ ॥
प्रतिप्रस्थाय संनाहशाली शैलमिवोन्नतम् । स भूपः प्रसभं भूरिप्रभावं पर्यभावयत् ॥
निर्जित्य केरलान् क्रूरकर्मा कार्णाटकानपि । स कोषमिभरामस्य पुपोष बहुतोषकृत् ॥
सोऽन्यानपि नृपानुग्रान् निगृह्य निजनीतिभिः । तद्राज्यमिभरामस्य रामराज्यमिवाकरोत् ॥
तमिन्दुसुन्दरमुखी सुदती यदुवंशजा । उपाचरन्महाराजं गौरीव वृषभध्वजम् ॥ २१ ॥
सा भृशं विभ्रमवती प्रसादाभिमुखी सती । देवी सफलयामास पत्युस्तत्तदभीप्सितम् ॥
तस्य तस्यामजायन्त पुत्राः षट् शुभलक्षणाः । तेषां मध्ये शंभुशिवौ द्वावेवान्वयवर्धनौ ॥
शिवस्तु वैष्णवं तेजोऽवतीर्य क्षोणिमण्डलम् । समस्तभूभृतां नेता विनेता प्रतिभूभृताम् ॥
[ यथा समजनिष्टायं जगदानन्दवर्धनः । ] तथाऽहमभिधास्यामि श्रृणुत द्विजसत्तमाः ॥
पुरा पुरारिमाराध्य तीव्रेण तपसाऽन्वहम् । निषेधाच्छ्रुतिशास्त्राणां कालः कलिरवर्धत ॥
हितावहमसाधूनां साधूनामहितावहम् । दैत्यास्ततस्तमासाद्य पापीयांसमनेहसम्॥ २७ ॥
छद्मिनो म्लेच्छरूपेण देवभूदेवविद्विषः । अवातरन्वसुमतीमधिविप्लावहेतवः ॥ २८ ॥
प्रतीचीं ककुभं तावदुदीचीं तदनन्तरम् । जगृहुस्ते बलात् प्राचीमपाचीमपि दुर्ग्रहाम् ॥
तेषां निजनयज्ञानां न यज्ञानां प्रवृत्तयः । तथाऽपि तिष्यस्य बलाद् भृशं ववृधिरे श्रियः ॥

उत्थाप्य स्थापिताः केचित् केचिद्युद्धे निपातिताः । बलिभिस्तैस्ततः प्रायः क्षत्रियाः
क्षीणतां गताः ॥ ३१ ॥
ततो विश्वंभरा देवी म्लेच्छभारभरार्दिता । प्रत्यपद्यत लोकेशं शरण्यं शरणैषिणी ॥ ३२ ॥
परितापेन महता मलिना नलिनासनम् । सा ववन्दे त्रयस्त्रिंशत्कोटित्रिदशवन्दितम् ॥
निवेदयित्री निर्वेदवती खेदमनेकधा । सा निबद्धाञ्जलिपुटा प्रोवाच परमेष्ठिनम् ॥ ३४ ॥
त्वं पिता सर्वलोकस्य त्रयीधर्मस्थितिप्रियः । लोकेश मां तमोम्भोधौ मज्जन्तीं किमु-
पेक्षसे ॥ ३५ ॥
त्वया विरचितं विश्वं विरिञ्चे यच्चराचरम् । दनुजैर्म्लेच्छतनुभिः तदद्य बत सीदति ॥
ये हताः प्रथमं देवैर्दुर्मदास्त्रिदशद्विषः । ते मां तुदन्ति तिष्येऽस्मिन्नुपेत्य म्लेच्छरू-
पताम् ॥ ३७ ॥
दुष्टदैत्यान्तके कृष्णे निजं धामाधितिष्ठति । बुद्धावतारे भगवत्यपि मौनावलम्बिनि ॥
दुर्जना यवनास्तात वृजिनानि वितन्वते । त्रातारं नाधिगच्छामि नियच्छेयं कथं व्यथाम् ॥
नाऽऽहूयन्ते दिविषदो न हूयन्ते हुताशनाः । न वेदा अप्यधीयन्ते नाभ्यर्च्यन्ते द्विजातयः ॥
न सत्राणि प्रवर्तन्ते तथैव च मखक्रियाः । न दानानि विधीयन्ते विहीयन्ते व्रतानि च ॥
खिद्यन्ते साधवः सर्वे भिद्यन्ते धर्मसेतवः । म्लेच्छधर्माः प्रवर्धन्ते हन्यन्ते धेनवोऽपि च ॥
सज्जना यान्ति विलयं व्रजन्ति क्षत्रियाः क्षयम् । प्रादुर्भूतमिदानीं मे यवनेभ्यो महद्भयम् ॥
विहसन्ति तथा सर्वे मां म्लेच्छवशवर्तिनीम् । स्थितां तथागतमुखे श्रुतिं श्रुतिविदो यथा ॥
उदभूत् पूर्वदेवेभ्यो भयं मम यदा यदा । तदा तदा प्रभवता भवता ह्यविताऽस्म्यहम् ॥
इदं निगद्य जगती जगतीनामधीश्वरम् । बभूव तूष्णीमित्युष्णं निश्वसन्त्यश्रुलोचना ॥
पितामहस्तामालोक्य विहस्तामस्थिरां स्थिराम् । एवमाश्वासयामास विश्वविश्वासवासभूः ॥

पितामह उवाच—

मा भैषीर्भीरु भव्यं ते भविताऽऽशु वसुंधरे । स्वस्था स्वं स्थानमास्थाय स्थिरे स्थिरतरा भव ॥
मया पुरा मुरारातिस्त्वन्निमित्तं दयाम्बुधिः । प्रार्थितः परया भक्त्या स्वयमेतदुवाच माम् ॥

विष्णुरुवाच—

विधे विधेहि मा चिन्तामवधेहि वचो मम । भवतोऽभिमतं तावदचिरेण भविष्यति ॥ ५० ॥
मालवर्मात्मजः शाहवर्मा यः पार्थिवोत्तमः । दाक्षिणात्यो महाराजः कृतकर्मा सुलक्षणः ॥
तरसा मारुतसमस्तेजसा तपनोपमः । वर्वर्ति विश्वविजयी पुण्यात्मा पृथुविक्रमः ॥ ५२ ॥
तस्य भार्या महासाध्वी जिजूर्विजयवर्धिनी । नन्दिनी यादवेन्द्रस्य जागर्ति जगतीतले ॥
सा मां तेजोमयं देवी स्वोदरे धारयिष्यति । तत्पुत्रतां प्रपद्याहं करिष्यामि तव प्रियम् ॥
स्थापयिष्यामि धर्मस्य मर्यादां भुवि शाश्वतीम् । यवनान् सादयिष्यामि पालयिष्यामि देवताः

पुनः प्रवर्तयिष्यामि सप्ततन्त्वादिकाः क्रियाः । क्षेमं गवां विधास्यामि स्थितिं चापि द्विजन्मनाम् ॥ ५६ ॥

प्रतिज्ञायेति भगवान् सत्यलोकाय मां विभुः । समनुज्ञातवान् भद्रे स्वयं भूतभविष्यवित् ॥

अभिधायेति वसुधां समाधाय पितामहः । विससर्ज स्वयं साऽपि स्वकं लोकमलोकत ॥

तां वाचं भूतधात्री त्रिभुवनसुहितां हृत्समाधेर्विधात्रीं
वैधात्रीं न्यस्य चित्ते तमभिमतमथानेहसं प्रेक्षमाणा ।
म्लेच्छच्छद्मासुरेभ्योऽभ्युदितमतितरामुज्झती भीतिभारं
हन्त ब्रह्मर्षिदेवद्विजकुलसहिता निर्भरं नन्दति स्म ॥ ५९ ॥

हरिरपि भुवमुच्चैर्भूरिभारायमाणत्रिदशरिपुसहस्राक्रान्तरूपामजस्रम् ।
सपदि सदयचित्तस्त्रातुकामः समग्रां बत निरुपममूर्तिर्मानुषं भावमैच्छत् ॥ ६० ॥

इत्यनुपुराणे सूर्यवंशे निवासकरकवीन्द्रपरमानन्दविरचितायामध्याशतसंमितायां वैयासक्यां संहितायां भगवत्प्रतिज्ञानं नाम पञ्चमोऽध्यायः ॥ ५ ॥

## षष्ठोऽध्यायः ।

कवीन्द्र उवाच —

अथो विविक्षुस्तत्कुक्षिं स्वयं योगेश्वरो हरिः । शाहपत्न्यै प्रसन्नात्मा स्वमात्मानमदर्शयत् ॥

सैकदा सुतनुः स्वप्ने दिविषद्वृन्दवन्दितम् । शङ्खचक्रगदापद्मपाणिं श्यामं चतुर्भुजम् ॥

श्रीवत्सवक्षसं कण्ठविनिवेशितकौस्तुभम् । वैजयन्तीकृतावासं पीतकौशेयवाससम् ॥ ३ ॥

विलसद्रत्नमुकुटं स्फुरन्मकरकुण्डलम् । मन्दस्मितोल्लसद्गण्डं प्रसन्नमुखमण्डलम् ॥ ४ ॥

पुण्डरीकायतदृशं सुनसं शुभलक्षणम् । प्रतिप्रतीकलावण्यलीलानिलयमद्भुतम् ॥ ५ ॥

समाश्लिष्टं कमलया शोभितं वनमालया । सर्वदेवमयं देवं सर्वाभरणभूषितम् ॥ ६ ॥

वज्ररेखाध्वजच्छत्रचिह्निताङ्घ्रिसरोरुहम् । बाललीलाधरं देवी स्वाङ्कस्थितमलोकत ॥ ७ ॥

ततोऽचिरेण सा गर्भं पत्नी शाहमहीपतेः । प्रभविष्णुं महाविष्णुमंशमूर्तिमदीधरत् ॥ ८ ॥

महता महसा तेन निजगर्भगतेन सा । व्यभाद्विभाकरेणेव शरदम्भोदमण्डली ॥ ९ ॥

तं वै तेजोमयं गर्भं तदा बिभ्राणया तया । यादवेन्द्रस्य सुतया भूषितं बत भूतलम् ॥ १० ॥

अथोद्यद्दोहदरसा गर्भभारभरालसा । अमंस्त पृथुलश्रोणी भारमाभरणानि सा ॥ ११ ॥

तदाननं पाण्डिमानं दधानमतुलं तदा । उपाहसत्प्रसादेन शारदं शशिमण्डलम् ॥ १२ ॥

न तच्चित्रं श्रिता यत्सा सुतनुस्तनुगौरवम् । देवो जगद्गुरुर्यस्याः साक्षात्कुक्षिमवीविशत् ॥
परिपाण्डुमुखीं सत्त्ववतीमथ सखीजनः । तामज्ञासीत्पार्श्वसेवी देवीमन्यादृशीमिव ॥१४॥
अथाध्यासनमद्रीणां द्विपानां द्वीपिनां तथा । स्वर्णसिंहासने स्थैर्यं सितच्छत्रतलेऽपि च ॥
केतनोन्नमनं चोच्चैश्चारुचामरवीजनम् । श्रुतिर्दुन्दुभिशब्दानां कृतिः संगरकर्मणाम् ॥१६॥
धारणं काण्डकोदण्डशक्तिनिस्त्रिंशवर्मणाम् । प्रसाधनं पर्वतानां साधनं विजयश्रियाम् ॥
महानादेष्वभिरतिर्धर्मस्य स्थापने मतिः । समभूवन्नमून्यस्यां दोहदानि दिने दिने ॥ १८ ॥
ततः कुमारभृत्यासु कुशलाभिरहर्निशम् । कुलशीलसमृद्धाभिर्वृद्धाभिः समुपासिते ॥ १९ ॥
चित्तानुसारिभिर्नित्यमत्यर्थं हितकारिभिः । जनैः सहचरीणां च लब्धवर्णैर्निषेविते ॥ २०॥
गर्भिणीपरिचर्यायां प्रौढैः पीयूषपाणिभिः । आप्तैर्भिषग्भिरश्रान्तमधिदेहलि संश्रिते ॥२१॥
सुधालेपोल्लसद्भित्तिनिर्मितस्वस्तिकाद्भुते । स्फुरद्वितानपर्यन्तलुलन्मौक्तिकजालके ॥ २२ ॥
प्रत्यग्रपल्लवोपेते विकीर्णश्वेतसर्षपे । सद्यः सलिलसंपूर्णसुवर्णकलशान्विते ॥ २३ ॥
द्वारदेशोभयप्रान्तलिखितोचितदैवते । परितः स्थापितानेकदीप्तमङ्गलदीपके ॥ २४ ॥
विहितौपयिकद्रव्यसंग्रहे सूतिकागृहे । दिव्य तेजोमयी देवी दिव्यरूपा व्यराजत ॥ २५ ॥
भूबाणप्राणचन्द्राब्दैः संमिते शालिवाहने । शके संवत्सरे शुक्ले प्रवृत्ते चोत्तरायणे ॥ २६ ॥
शिशिरर्तौ वर्तमाने प्रशस्ते मासि फाल्गुने । कृष्णपक्षे तृतीयायां निशि लग्ने सुशोभने ॥
अनुकूलतरैस्तुङ्गसंश्रयैः पञ्चभिर्ग्रहैः । व्यञ्जिताशेषजगतीस्थिरसाम्राज्यवैभवम् ॥ २८ ॥
अपारलावण्यमयं स्वर्णवर्णमनामयम् । कमनीयतमग्रीवमुन्नतस्कन्धमण्डलम् ॥ २९ ॥
अलिकान्तमिलत्कान्तकुन्तलाग्रविराजितम् । सरोजसुन्दरदृशं नवकिंशुकनासिकम् ॥ ३० ॥
सहजस्मेरवदनं घनगम्भीरनिःस्वनम् । महोरस्कं महाबाहुं सुषुवे साऽद्भुतं सुतम् ॥३१॥
तदा मुदा मानुषाणां सुराणां च सहस्रशः । समं दुन्दुभयस्तस्य नादेन नदतोऽभवन् ॥
वादित्राण्यप्यवाद्यन्त विविधानि गृहे गृहे । प्रसीदन्ति स्म हरितः समस्ताः सरितस्तथा ॥
शनैः शनैस्तथा वाता वाताः सुरभिशीतलाः । हुतं हविरुपादत्त प्रसन्नश्च हुताशनः ॥
श्रुतिः स्मृतिर्धृतिर्मेधा कान्तिः शान्तिः क्षमा दया । नीतिः प्रीतिः कृतिः कीर्तिः सिद्धिः श्रीश्च सरस्वती ॥ ३५ ॥
तुष्टिः पुष्टिश्च शक्तिश्च ह्रीश्च विद्या च संनतिः । तं देवं देवता एताः समेताः पर्यवारयन् ॥
योद्धुमद्धा पठानेन दर्याखानेन मानिना । शाहराजे महाराजे प्रयाते विषयान्तरम् ॥३७॥
अनुग्रहाय देवानां दैत्यानां निग्रहाय च । प्रभुः स जगतां प्रादुरभूद् भृशबलान्वये ॥ ३८ ॥
अतोऽजस्यापि जातस्य जातकर्म तदञ्जसा । व्यधीयत विधिज्ञेन यथाविधि पुरोधसा ॥
यः स्वयं सर्वलोकस्य स्थित्यर्थमभवद्विभुः । सूक्तैः सूक्तविदस्तस्याप्याचरन् स्वस्तिवाचनम् ॥

तदा तत्रावतीर्णस्य विष्णोर्मानुषवर्ष्मणः । तेजोभरेण महता निशाऽपि दिवसायिता ॥४१॥
आदित्या वसवो विश्वे रुद्राश्च समरुद्गणाः । यक्षाः साध्याश्च गन्धर्वास्तथा विद्याधरा अपि ॥
नन्दिनीप्रमुखा गावो नागाश्चैरावतादयः । सुरर्षयो नारदाद्याः संभूयाप्सरसस्तथा ॥
इन्द्रोऽग्निर्धर्मराजश्च नैर्ऋतश्च जलेश्वरः । पृषदश्वो धनेशश्च महेशश्च दिगीश्वराः ॥ ४४ ॥
अष्टाविमेऽश्विनौ देवौ सूर्याचन्द्रमसौ तथा । अन्येऽपि च सनक्षत्रा ग्रहाः सुभगविग्रहाः
घटीमुहूर्ताहोरात्रपक्षमासर्तुवत्सराः । युगानि दिव्यादिव्यानि तथा मन्वन्तराणि च ॥४६॥
भुवो भारमपाकर्तुमवतीर्णे जगत्पतौ । संनिधाय स्वयं तत्र स्वस्तिवाचनमाचरन् ॥ ४७ ॥
गणेशं जन्मदां षष्ठीं देवीं जीवन्तिकामपि । स्कन्दं नारायणं वंशं बलदेवं च लाङ्गलम् ॥४८॥
शरासनं शरान् खड्गं विविधान्यायुधानि च । तत्तन्मन्त्रैः समभ्यर्च्य सूतिकाग्रहमन्तरा ॥
प्रयतः पञ्चमे षष्ठेऽप्यष्टमे नवमेऽहनि । रक्षन्तु बालमित्युक्त्वा प्रणम्य च पुरोहितः॥५०॥
क्षेत्रपालाय भूतेभ्यो राक्षसेभ्यो गृहाद्बहिः । बलीनदाद्योगिनीभ्यो दिक्पालेभ्योऽप्यनेकधा
त्रिजगज्जागरूकस्य जाते षष्ठीप्रजागरे । जने जनिविशेषेण दशमेऽह्नि महात्मनः ॥ ५२ ॥
ताम्रपर्ण्यथ कावेरी तुङ्गभद्रा मलापहा । कृष्णा ककुद्मती वेणा नीरा भीमरथी तथा ५३
गोदावरी च गायत्री प्रवरा वञ्जुला पुनः । पूर्णा पयोष्णी तापी च नर्मदा च महानदी
क्षिप्रा चर्मण्वती मद्रा यमुना वेत्रवत्यपि । भागीरथी चन्द्रभागा गोमती गण्डकी तथा ॥
इरावती विपाशा च शतद्रुश्च सरस्वती । वितस्ता सरयूश्चापि तमसा च वधूसरा ॥ ५६ ॥
सिन्धुघर्घरशोणाद्यैर्नदैर्निःश्रेयसप्रदैः । पुष्कराद्यैः सरोभिश्च सागरैश्च समन्विताः ॥ ५७ ॥
अलक्षितेन रूपेण नद्यः पुण्यतमा इमाः । तदा तस्याभिषेकाय सोत्सवाः समुपागमन् ५८
देवसेना शची स्वाहा समृद्धिः सर्वमङ्गला । अदितिर्विनता संज्ञा सावित्री चाप्यरुन्धती ॥
तां युक्तां तत्र बालेन तेनाप्रतिममूर्तिना । प्रसूतिकामस्नपयन् मिलिताः कुलयोषितः ॥
जननीं रजनीरागरञ्जिताङ्शुकधारिणीम् । अलंकारवतीमङ्कविनिवेशितबालकाम् ॥ ६१ ॥
दिनश्रियमिवोदारां नवोदितदिवाकराम् । नीराजनाभिः सुभगाः सुभ्रुवः समभावयन् ६२
यतः शिवगिरेर्मूर्ध्नि जातः स पुरुषोत्तमः । ततः प्रसिद्धा लोकेऽस्य शिव इत्यभिधाऽभवत् ॥
करिष्यत्येष बलवानिह कर्मातिमानुषम् । म्लेच्छान्निहत्य महतीं कीर्तिं विस्तारयिष्यति ॥
जित्वाऽवाच्यांश्च पाश्चात्यान् प्राच्यांश्च भुजतेजसा । तथोदीच्यांश्च विजयी स्वराज्यं संविधास्यति ॥ ६५ ॥
साहसी सागरमपि वश्यतामानयिष्यति । बली बलैर्दिगन्तेभ्यो बलीनानाययिष्यति ॥६६॥
प्रभावी गिरिदुर्गाणि वनदुर्गाणि चाप्ययम् । तथा सलिलदुर्गाणि स्थलदुर्गाणि गोप्स्यति ॥

बत दिल्लीपतेर्मूर्ध्नि प्रतापेन तपन्नयम्। निजं चरणमाधाय जगदाज्ञापयिष्यति ॥ ६८ ॥
सुदुर्गमेषु मार्गेषु गहनेषु गिरिष्वपि। सरित्सु च समुद्रेषु यस्याप्रतिहता गतिः ॥ ६९ ॥
स एष पाण्ड्यद्रविडलाटकर्णाटकेरलान्। करहाटवैराटान्ध्रमालवाभीरगुर्जरान् ॥ ७० ॥
आर्यावर्तांश्च दुर्म्लेच्छकृतावर्मानेनेकशः। कुरुजाङ्गलसौवीरधन्वसौराष्ट्रकोसलान् ॥ ७१ ॥
वाह्लीकमद्रगान्धारत्रिगर्तानर्तसैन्धवान्। कलिङ्गकामरूपाङ्गवङ्गकाम्बोजकेकयान् ॥ ७२ ॥
पारसीकान् शिबीन् शाल्वान्पुलिन्दारट्टबर्बरान्। काश्मीरमत्स्यमगधविदेहोत्कलटङ्कणान् ॥
किरातकाशिपाञ्चालचेदीनपि च कुन्तलान्। खशांश्च शूरसेनांश्च हूणान् हैमवतानपि॥७४॥
उण्ड्रान्पुण्ड्रान् ललित्थांश्च महितेन स्वतेजसा। चिरजीवी विनिर्जित्य महाराजो भविष्यति
यथा पृथुरभूत्पूर्वं यथा राजा पुरूरवाः। अम्बरीषोऽपि च यथा शिबिश्चौशीनरो यथा ॥
यथाऽजनिष्ट मांधाता यथा च निषधाधिपः। यथा बभूव भरतो यथा भूपो भगीरथः ॥
हरिश्चन्द्रः स च यथा रामो दाशरथिर्यथा। यथा च मिथिलाधीशो ययातिर्नहुषो यथा॥
यथा धर्मधनो राजा धर्मराजो युधिष्ठिरः। भविष्यति तथैवायं शाहराजसुतः शिवः॥ ७९ ॥
मध्येसभं दैवविदः सर्वसिद्धान्तपारगाः। एवमस्य कुमारस्य जन्मवेलामवीवदन् ॥ ८० ॥
प्रचीयमानावयवव्यक्तविग्रहभूषणम्। स्थितिप्रवणलावण्यलब्धसौभाग्यवैभवम् ॥ ८१ ॥
विचित्रमणियुक्ताभिर्मुक्ताभिर्मञ्जुलात्मना। विभ्राजमानं हैमेन मुकुटेन शिरःस्पृशा ॥८२॥
लीलाचलाचलं भाले हैमं चलदलच्छदम्। दधानं विस्फुरन्मुक्तामणिसूत्रान्तलम्बितम् ॥
अनर्घ्यहीरकिर्मीरपद्मरागमरीचिभिः। संभूतश्रीभरोदग्रे बिभ्राणं भुजभूषणे ॥ ८४ ॥
गरुत्मद्रत्नसंपृक्तसाम्रव्याघ्रनखश्रिया। विन्यस्तया भ्राजमानं कृष्णकाचमणिस्रजा ॥ ८५ ॥
सद्रत्ननिकरोदञ्चत्काञ्चनप्रतिमात्मिकाम्। देवीं जीवन्तिकानाम्नीमाबिभ्राणं भुजान्तरे ॥
प्रवालनीलसंमिश्रसुवर्णमणिनिर्मिते। वलये ललिताकारे कलयन्तं करद्वये ॥ ८७ ॥
बताऽऽनन्दमयं दिव्यसूत्रसंबद्धमध्यमम्। विस्फुरद्गुल्फवलयं विलसन्मणिनूपुरम् ॥
विदग्धाभिः स्वयं स्निग्धलोचकाञ्चितलोचनम्। भालान्तरालविन्यस्तचित्रकज्जलचित्रकम् ॥
कमनीयतमस्वर्णकञ्चुकावृतविग्रहम्। धात्र्यः स्मेरमुखं प्रीतास्तं बालं पर्यपालयन् ॥ ९० ॥
अन्तर्बहिश्चरोऽप्येष बहिर्विहितनिष्क्रमः। व्यधादसूर्यपश्यायाः शिशुः सूर्यस्य दर्शनम् ॥ ९१ ॥
उपवेशनमप्यन्नप्राशनं च यथाविधि। अस्य राजकुमारस्य क्रमेण समजायत ॥ ९२ ॥
दर्याखानं शरैर्भित्त्वा नीत्वा निरवलेपताम्। विजयी शाहराजोऽपि शिवं गिरिमथाव्रजत् ॥
स तत्र सोदरं शंभोरम्भोजसमलोचनम्। व्यालोकत मुदोपेतः सदोदितपराक्रमः ॥ ९४ ॥

गाः काञ्चनानि करिणस्तुरगांश्च राजा रत्नानि च प्रमुदितो व्यतरत्तदानीम् ॥
सद्यो यथाऽत्र निरमुच्यत भूरिकालं सर्वोऽर्थिनामपि जनोऽन्यजनार्थनाभ्यः ॥ ९५ ॥
अथ धरणिमघोनः सूनुरुच्चैर्धरित्रीमधि सरसिजहस्तः संचरल्लोकबन्धुः ॥
निखिलतिमिरहारी बालसूर्योपमानः प्रसभमभृत शोभां वर्धमानः क्रमेण ॥ ९६ ॥

इत्यनुपुराणे सूर्यवंशे निवासकरकवीन्द्रपरमानन्दविरचितायामध्यायश-
तसंमितायां वैयासक्यां संहितायां शिवराजप्रभवो
नाम षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः।

कवीन्द्र उवाच —

अथ तं शिशुरूपेण ललन्तं ललितद्युतिम्। न जानीतः स्म पितरावमानुषमुरुक्रमम् ॥
अवतीर्णः क्षोणितलं क्षोणीभारापनुत्तये। विहरन् बालरूपेण शाहराजनिकेतने ॥ २ ॥
जनयित्रीं जनं चापि रञ्जयन् निजया श्रिया। अचेष्टत स सर्वात्मा तत्र तत्तद्विचेष्टि-
तम् ॥ ३ ॥
सुत्रामकाङ्क्षितं कर्तुं दितेः पुत्राननेकशः। संगरे संगरे हत्वा चतुर्बाहुरुदायुधः ॥ ४ ॥
यः श्रान्त इव निद्राति मध्ये दुग्धमहोदधेः। जननीस्तन्यपानाय व्यतानीद्रुदितानि सः ॥
शिशुलीलाधरो रिङ्गन्स हरिन्मणिभूमिषु। प्रतिबिम्बितमात्मानं बलेनाऽऽदातुमैहत ॥६॥
जानुभ्यां रिङ्गतस्तस्य पदाम्बुजतलत्विषा। पद्मरागश्रियं प्रापुः प्राङ्गणस्थाः सितोपलाः ॥
धूलिधूसरिताङ्गस्य रिङ्गतोऽस्य गृहाङ्गणे। रञ्जयामास जननीं मणिमञ्जीरसिञ्जितम् ॥
स लीलातरलस्तत्र रिङ्गन्मणिमयेऽङ्गणे। बताऽऽत्मप्रतिबिम्बेन प्रास्पर्धत पदे पदे ॥ ९ ॥
अपिबन्यत्प्रसादेन सुधां सर्वे सुधान्धसः। अहो सोऽपि मुदं प्रापदास्वाद्य मृदुलां
मृदम् ॥ १० ॥
छलयन् यो बलिं लोकांस्त्रीन्ललङ्घे त्रिभिः क्रमैः। बतालङ्घत यत्नेन स देवो गेहदे-
हलीम् ॥ ११ ॥
सप्तानामपि लोकानां योऽवलम्बः स्वयं प्रभुः। उदतिष्ठदहो धृत्वा सोऽपि धात्रीकरा-
ङ्गुलिम् ॥ १२ ॥
धवलोपलबद्धासु भित्तिषु प्रतिबिम्बितम्। बिम्बमंशुमतो वीक्ष्य तर्जन्यग्रेण दर्शयन् ॥
आदाय निजहस्तेन मह्यं देहीत्यहो रुदन्। स मुग्ध इव मौग्ध्येन मातरं पर्यहासयत् ॥

स्वहस्तपुष्करोध्दूतधूलिधूसरमस्तकम् । उद्भिद्यमानदन्ताग्रकुन्दकुड्मलभूषितम् ॥ १५ ॥
ललन्तं निलयद्वारि द्विरदस्येव शावकम् । विनेतुमागता धात्री विलोक्य स्तिमिताऽभवत् ॥ १६ ॥
स धात्रीकरतालीभिः संवर्धितकुतूहलः । कुरुते स्म स्मेरमुखो लास्यलीलामनेकधा ॥
अपाठयद्विधातारं निगमान्यः सलक्षणान् । सोऽपि धात्रीमुखात्तत्तन्नामधेयमपीपठत् ॥
उत्तार्योत्तार्य तरसा स्वरसात्स समर्धुकः । व्यश्राणयदलंकारान् धात्रीभ्यः स्वशरीरतः ॥
अनादृत्य पितुस्तांस्तान् द्विपान्दत्तांस्तथा हयान् । प्रभुर्मन्तुममन्तुं च बह्वमंस्त स मृन्मयान् ॥ २० ॥
स्पृहयालुः शिखण्डेभ्यः शोभमानशिखण्डकः । अन्वधावदहो डिम्भः स खण्डानि शिखण्डिनाम् ॥ २१ ॥
शिखिनां च शुकानां च पिकानां च रुतान्यसौ । विकुर्वाणोऽनुकुर्वाणस्तत्तद्भ्रमकरोऽभवत् ॥ २२ ॥
स एष किल कुर्वाणः शिशुः शार्दूलशब्दितम् । पार्श्ववर्तीं स्नेहपात्रीमपि धात्रीमभीषयत् ॥
अभ्रान्तोऽपि भ्रमरवद् भ्रमिं भ्रान्तः कदाचन । हृष्टो हय इव ह्रेषामह्रेषत कदाचन ॥ २४ ॥
उच्चैरुदचरद्दन्तिबृंहितानि कदाचन । [कदा च सिंहनिनदान्दृप्तः सिंह इवाकरोत् ] ॥२५॥
पूरयद्भिर्धरां द्यां च गभीरमधुरस्वरैः । सोऽभिमानपरो भेरीमन्वकार्षीत् कदाचन ॥२६ ॥
मृत्कूटान्यपि तुङ्गानि कारयन् स किशोरकैः । इमानि मम दुर्गाणीत्यवोचत कदाचन ॥
निलीनः सद्मनः कोणे दृङ्निमीलनकेलिषु । अन्विष्य सखिभिः स्पृष्टो हसति स्म कदाचन ॥
पातितं पाणिना हस्तादुत्पतन्तं मुहुर्मुहुः । अताडयत् पातयितुं कन्दुकं च कदाचन ॥
आत्मनोत्पातितं दूरात् पतन्तं व्योममण्डलात् । कन्दुकं कृष्णसाराक्षः पश्यन्नवहितोन्मुखः
नृत्यन्निव पदद्वंद्वतलताडितभूतलः । प्रोत्तानिताभ्यां पाणिभ्यामग्रहीत्स कदाचन ॥३१॥
दृष्टो हरति यस्तूर्णं जन्मिनां जननभ्रमम् । अभ्रामयदहो दारुभ्रमरं स कदाचन ॥३२॥
प्रतिषिद्धोऽपि धात्रीभिस्तर्जनीतर्जनादिना । शाहसिंहशिशुस्तां तां शिशुलीलां व्यगाहत ॥
भुङ्क्ष्वेत्युक्तोऽपि नाभुङ्क्त पिबेत्युक्तोऽपि नापिबत् । अनुनीय स धात्रीभिः शेष्वेत्युक्तोऽपि नास्वपत् ॥३४ ॥
तत्तत्खेलावसक्तात्मा स आत्मा जगतः परः । समाहूतो जनन्याऽपि व्यधाद्दूरमपक्रमम्
यत्र यत्राव्रजद्बाललीलारसवशः शिवः । तमन्वपालयंस्तत्र तत्र देवाः सवासवाः ॥३६॥

यः श्रीमान् करुणानिधिः सुमनसामाधारभूतः स्वयं
संजातः किल शाहभूपभवने हर्तुं धरित्रीभयम् ।

वेदान्तैः पठितः पुराणपुरुषः ख्यातः पुराणेषु य-
स्तं प्राप्य श्रियमाबभार महतीं बाल्याभिधानं वयः ॥ ३७ ॥

इत्यनुपुराणे सूर्यवंशे निवासकरकवीन्द्रपरमानन्दविरचितायाम्
अध्यायशतसंमितायां वैयासक्यां संहितायां शिशुलीला-
वर्णनं नाम सप्तमोऽध्यायः ॥ ७ ॥

## अष्टमोऽध्यायः ।

मनीषिण ऊचुः—

शिवनेरिगिरौ जातः शिवराज इति त्वया । परमानन्द संप्रोक्तमस्ति नस्तत्र संशयः ॥१॥
स हि शैलो निजामस्य प्रियकारी महायशाः । प्रतापी प्रथितो लोके धारागिरिरिवापरः २
अभूदागमनं तत्र यथा शाहमहीपतेः । तथा कथय नः सर्वं भट्टगोविन्दनन्दन ॥ ३ ॥

कवीन्द्र उवाच —

सुधामिवातिमाधुर्यवतीं पुण्यवतीमिमाम् । कथां शाहनरेन्द्रस्य शृणुत द्विजसत्तमाः ॥४॥
अस्तंगतेऽम्बरमणिप्रतापे बर्बरेऽम्बरे । निर्मन्त्रिणि निजामे च स्थितिसंजातसंशये ॥ ५ ॥
दिवंगते दैवयोगादिभरामेऽनुभाविनि । तत्सुते महमूदे च दृप्ते तत्पदवर्तिनि ॥ ६ ॥
सैन्ये साहिजहानस्य दिल्लीन्द्रत्वमुपेयुषः । दक्षिणां दिशमादातुमवलेपादुपागते ॥ ७ ॥
प्रतनेनानुबन्धेन निजामोपचिकीर्षया । शाहराजो महाबाहुर्विजयाह्वं पुरं जहौ ॥ ८ ॥
अथ यादवराजोऽपि हित्वा ताम्रानुयायिताम् । पक्षपाती निजामस्य धारागिरिमुपागमत् ॥
अत्रान्तरे निजामस्य भृशं विश्रम्भभाजनम् । वंश्यो विश्वासराजस्य शिवभक्तो महाव्रतः॥
तनयः सिद्धपालस्य सुप्रसिद्धोऽतिवैभवः । शिवनेरिगिरिस्थायी नृपतिर्विजयाह्वयः ॥११॥
वराय शंभुराजाय शाहराजसुताय वै । जयन्तीमात्मतनयामनुरूपाममन्यत ॥ १२ ॥
शाहराजोऽपि संबन्धं तं सुश्लाघ्यतमं भुवि । संविचिन्त्य स्नुषात्वेन जयन्तीं तमयाचत ॥
ततो विजयराजस्य शाहराजस्य चोभयोः । अभूद्यथोक्तसंबन्धसुप्रयुक्तो महोत्सवः ॥१४॥
विश्वासराजवंश्यानां भूपानां भूरितेजसाम् । तथा भृशबलानां स समवायो महानभूत् ॥
स तयोः श्लाघ्यगुणयोर्जयन्तीशंभुराजयोः । शिवनेरिगिरावासीत्पाणिग्रहमहो महान् ॥
अथो कतिपयाहोभिस्तं समाप्य महोत्सवम् । तस्यैव च गिरेर्मूर्ध्नि स्वजनेन समन्विताम् ॥
संबन्ध्यनुमतः पत्नीमन्तर्वत्नीं निधाय ताम् । प्रतस्थे शाहनृपतिर्दर्यास्वानजिगीषया॥१८॥
शिवनेरिगिरौ वासीच्छाहस्याऽऽगमनं यथा । तथा कथितवानस्मि किमथ श्रोतुमिच्छथ ॥

मनीषिण ऊचुः—

सद्यो दिल्लीश्वरं हित्वा पक्षपातिन्युपागते । महाव्रते महाराजे यदुराजे महाभुजे ॥ २० ॥
अभिक्रमपरैस्ताम्रमुखैर्योद्धुं समुद्यते । अभीप्समानः स्वाभीष्टं निजामः किमचेष्टत ॥ २१ ॥

कवीन्द्र उवाच—

अथ दैवान्निजामस्य विषयाविष्टचेतसः । हन्त दुर्मन्त्रिणो योगाज्जज्ञे मतिविपर्ययः ॥ २२ ॥
तस्य मत्तस्य सविधे ययौ साधुरसाधुताम् । प्रियवादपरोऽत्यर्थमसाधुरपि साधुताम् ॥ २३ ॥
विपरीतदृशा तेन गुरवोऽपि लघूकृताः । गुणोपेताश्च गुरवो नीताः शीघ्रमगौरवम् ॥ २४ ॥
अव्यवस्थितचित्तस्य मत्तस्य मधुनाऽन्वहम् । अवद्यवादिनस्तस्य बत राष्ट्रमहीयत ॥ २५ ॥
अथ प्रणन्तुमायातमतीवप्रतिभान्वितम् । निजामो यादवाधीशमवमेने सुदुर्मतिः ॥ २६ ॥
अवज्ञातो निजामेन महामानी महामनाः । यदुराजस्तदा वीररसावेशवशोऽभवत् ॥ २७ ॥
अथ सेनाधिपतयो हमीदाद्याः सुदुर्मदाः । दुर्मन्त्रिते निजामेन पूर्वमेव प्रबोधिताः ॥ २८ ॥
साभिमानं परावर्तमानं मत्तमिव द्विपम् । आस्थानीतोरणोपान्ते रुरुधुर्यादवेश्वरम् ॥ २९ ॥
स तत्र बहुभिर्युध्यन् सपुत्रामात्यबान्धवः । प्रत्युद्यातः सुरगणैः सुरलोकमलोकत ॥ ३० ॥
यथा मेरोर्विपर्यासः पातो भानुमतो यथा । यथा ह्यन्तः कृतान्तस्य दाहः पत्युरपां यथा ॥ ३१ ॥
तथा यादवराजस्य तदा तत्र बतात्ययः । सप्तानामपि लोकानामभूदत्याहितावहः ॥ ३२ ॥
तदवस्थमथ श्रुत्वा श्वशुरं यादवेश्वरम् । शाहो निजामसाहाय्याद्विरराम महायशाः ॥ ३३ ॥
अथ तापीतटात्तूर्णमेत्य ताम्रपताकिनी । अधिष्ठितं निजामेन धारागिरिमवेष्टयत् ॥ ३४ ॥
समुह्य स्वां महामानी तदानीमेव येदिलः । पृतनां प्रेषयामास लुब्धो धारागिरिं प्रति ॥ ३५ ॥
सैन्यं साहिजहानस्य महमूदस्य चान्वहम् । अयुध्येतां मिथस्तत्र धारागिरिजिगृक्षया ॥ ३६ ॥
स्वयं निजामशाहोऽपि धारागिरिशिरःस्थितः । तदा ताभ्यामपि द्वाभ्यामनीकाभ्यामयुध्यत
ततोऽतिबलिभिस्ताम्रबलैर्युध्यद्भिरञ्जसा । महमूदस्य चानीकैर्निजामः पर्यभूयत ॥ ३८ ॥
ततः स तेन शैलेन सैन्येन विविधेन च । यथाजातेन च तथा फत्तेखानेन मन्त्रिणा ॥ ३९ ॥
परिग्रहेण सर्वेण कोषेण च महीयसा । ममज्ज सहितस्तत्र ताम्राननबलार्णवे ॥ ४० ॥

मनीषिण ऊचुः—

यस्याशीतिसहस्राणि तुरगाणां तरस्विनाम् । अशीतिरद्रिदुर्गाणां चतुर्भिरधिका पुनः ॥ ४१ ॥
स्थले जले च यस्याऽऽसन् बत दुर्गाण्यनेकशः । समृद्धो विषयो यस्य वशे विद्वेषिदुर्ग्रहः ॥
येन येदिलशाहस्य दिल्लीन्द्रस्य च मानिनः । पदे पदे बलं सर्वं जीवग्राहं व्यमृज्यत ॥ ४३ ॥
यस्याऽऽकस्मिकझम्पस्य श्येनस्येवोत्पातिप्यतः । प्रभावेण न्यलीयन्त परिपन्थिविहंगमाः ॥

स निजामस्तदा येन हेतुना विलयं गतः । शुश्रूषमाणान् नः सर्वान् कवीन्द्र तमुदीरय॥४५॥

कवीन्द्र उवाच—

समस्तपालनपरे पितर्युपरतेऽम्बरे । भवितव्यानुसारेण फत्तेखानोऽल्पचेतनः ॥ ४६ ॥

अमात्यतां निजामस्य प्रतिपद्य प्रतापवान् । तापयामास जनतां कृतान्त इव निष्कृपः॥४७॥

निजामस्तस्य मन्त्रेण हमीदस्य च दुर्मतेः । यदाप्रभृति राजन्यं यदुराजं न्यघातयत् ॥४८॥

शाहराजप्रभृतयस्तदाप्रभृति भूभृतः । सर्वे विमनसो भूत्वा म्लेच्छाश्च पृतनाभृतः ॥४९॥

अविश्रम्भादमर्षाच्च साध्वसाच्च समाकुलाः । शिश्रियुर्यैदिलं केऽपि केऽपि दिल्लीन्द्रमश्रयन्॥

केचिच्च क्रूरमनसो विरुद्धत्वमुपाचरन् । तटस्थमिव चाऽऽत्मानं बत केचिददर्शयन्॥५१॥

तेन तेन तदा तस्य दुर्नयेन दुरात्मनः । अवृष्टिरजनिष्टोच्चैरनिष्टाय शरीरिणाम् ॥ ५२ ॥

चिरस्य विषये तस्य न ववर्ष कृपा यदा । सस्यं सुदुर्लभमभूत्स्वर्णं तु सुलभं तदा॥ ५३ ॥

प्रस्थमात्राणि रत्नानि विनिमय्य धनी जनः । कथंचन समादत्त कुलत्थान्प्रस्थसंमितान्॥५४॥

आहाराभावतोऽत्यर्थं हाहाभूताः परस्परम् । पशून्वै पशवो जक्षुर्मानुषा अपि मानुषान्॥५५॥

तेनावर्षेण महता परचक्रागमेन च । अभावेन च मौलानामनीकस्य च भूयसः ॥ ५६ ॥

अनुक्षणं क्षीयमाणस्ताम्रास्यैरनुभाविभिः । धृतो धारागिरिपतिः फत्तेखानश्च दुर्मतिः॥५७॥

अनुकूलेन कालेन सर्वं धत्तेऽनुकूलताम् । प्रतिकूलेन तेनैव सकलं प्रतिकूलताम् ॥ ५८ ॥

यस्यानुकूलो भगवान् काल एष सनातनः । अनायासेन सिध्यन्ति तस्य कार्याणि देहिनः ॥

जनिः सत्ता च वृद्धिश्च विपाकोऽपचयोऽपि च । क्षयश्च षडमी भावविकाराः कालनिर्मिताः

जयः पराजयो वाऽपि वैरं मन्त्रिबलाबले । सविद्यत्वमविद्यत्वमुदारत्वं कदर्यता ॥ ६१ ॥

प्रवृत्तिश्च निवृत्तिश्च स्वातन्त्र्यं परतन्त्रता । समृद्धिरसमृद्धिश्च जायन्ते कालपर्ययात् ॥६२॥

मृत्युर्जन्म वयश्चापि तिस्रोऽवस्थाश्च तस्य ताः । कालादेव प्रवर्तन्ते तथा यज्ञादिकाः क्रियाः

न कालेन विना बीजं न कालेन विनाऽङ्कुरः । न कालेन विना पुष्पं न कालेन विना फलम् ॥ ६४ ॥

न कालेन विना तीर्थं न कालेन विना तपः । न कालेन विना सिद्धिर्न कालेन विना जयः ॥

न कालेन विना भान्ति शशाङ्कशुचिभास्कराः । न कालेन विना वृद्धिमवृद्धिं चैति सागरः ॥

न कालेन विना गङ्गामाजहार भगीरथः । न कालेन विना कार्कलास्यान्मुक्तो नृगो नृपः ॥

न कालेन विना रामो निजघान दशाननम् । न कालेन विना लङ्का प्रतिपेदे बिभीषणम् ॥

न कालेन विना कृष्णो गोवर्धनमदीधरत् । न कालेन विना पार्थो वैकर्तनमजीघतत् ॥

सुखानामसुखानां च काल एव हि कारणम् । कालमेवेश्वरं मन्ये सर्गस्थित्यन्तकारिणम् ॥

संगरे भङ्गमासाद्य निजामो विलयं गतः । लब्ध्वा देवगिरिं दैत्यो दिल्लीन्द्रो मुदमागतः॥

तथा येदिलशाहोऽपि सैन्यभङ्गाद्विलज्जितः । तदेतदखिलं कालजातं जानीत भो द्विजाः॥
निरुध्य धारागिरिदुर्गमुग्रं ताम्राननैस्तत्र धृते निजामे । गताभिमाना विहिताप्यमाना बभूव सेना किल येदिलस्य ॥७२॥

इत्यनुपुराणे सूर्यवंशे निवासकरकवीन्द्रपरमानन्दविरचितायामध्याशतसंमितायां वैयासक्यां संहितायां [ निजामविलयो ] नाम अष्टमोऽध्यायः ॥ ८ ॥

## नवमोऽध्यायः ।

कवीन्द्र उवाच—

अथ देवगिरिं प्राप्य दिल्लीन्द्रे मुदितात्मनि । दुर्मदे महमूदे च सत्रसैन्ये विषादिनि १ ॥
शाहो निजामशाहस्य शैलदुर्गाण्यनेकशः । शिवनेरिमुखान्याशु कालेन वशमानयत् ॥ २ ॥
गोदावरीं महापुण्यां प्रवरां च प्रभाविणीम् । नीरां क्षीराधिसक्षीरां भीमां भीमरथीमपि ३॥
श्रितं जनपदं सर्वं समाक्रम्य क्रमेण च । स्ववशे स्थापयामास सद्यः सह्यं च पर्वतम् ॥४॥
शक्रप्रस्थस्य शक्रेण विरुद्धोऽयमभूद्यदा । महाराजममुं भेजुर्महाराष्ट्रनृपास्तदा ॥ ५ ॥
घाण्टिकाः काण्टिकास्तद्वद्ढोकपाटाश्च काङ्कटाः । तोमराश्चाहुवाणाश्च महिताश्च महाद्रिकाः ॥ ६ ॥
खराटाः पाण्डरास्तद्वद्व्याघ्रघोरफटादयः । तदा शाहनरेन्द्रेण पृतनापतयः कृताः ॥७॥
अथ शाहजयापेक्षी जहानगिरनन्दनः । समं येदिलशाहेन सद्यः संधिमयोजयत् ॥ ८ ॥
ततो राजतुरासाहं शाहं युधि जिगीषतोः । तयोः समभवत्सीमा भीमा नाम महानदी९॥

मनीषिण ऊचुः—

शाहः शाहिजहानस्य सेनया येदिलस्य च । साहसी सिंहविक्रान्तः कति वर्षाण्ययुध्यत१०
कथं च संधिमकरोत्ताभ्यां द्वाभ्यामपि प्रभुः । कवीन्द्र भवतः श्रोतुमिदमीहामहे वयम् ११

कवीन्द्र उवाच—

शाहः साहिजहानस्य येदिलस्य च सेनया । अयुध्यत समास्तिस्रः सहस्रकरविक्रमः १२॥
ततो स्वप्नपतिः स्वप्ने धूर्जटिस्तेन वन्दितः । तद्दृशौ दशनोद्योतैर्दीपयंस्तमवोचत१३॥

धूर्जटिरुवाच—

अतीवदुर्जयो लोके दिल्लीन्द्रोऽसौ महाद्युतिः । तस्मादायोधनावेशाद्विरम त्वं महामते १४
यवनेन पुरा चीर्णं तपस्तीव्रं दुरात्मना । तद्यावदस्त्यसौ तावन्न विनाशमुपैष्यति ॥१५॥
सर्वेऽपि यवनास्तात पूर्वदेवान्वया इमे । देवांश्च भूमिदेवांश्च विद्विषन्ति पदे पदे ॥१६॥

यो हन्तुं यवनानेतानेतां भुवमवातरत् । स एष भगवान् विष्णुः शिवसंज्ञः शिशुस्तव॥१७॥
करिष्यत्यचिरेणैव तदेतत्त्वच्चिकीर्षितम् । तस्मादनेहसं कंचित्प्रतीक्षस्व महाभुज ॥ १८॥
एवमुक्तवति प्रीतिमति देवे कपर्दिनि । प्राबुध्यत प्रसन्नात्मा प्रभाते पृथिवीपतिः ॥ १९ ॥
ततो निजामविषयं शाहः स्वविषयं विना । दिल्लीन्द्राय ददौ कंचिद्येदिलाय च कंचन ॥
हठशीलोऽपि तं शाहः प्रहाय हठमात्मनः । व्यधाद्येदिलताम्राभ्यां संधिं त्रियनाज्ञया॥२१
ततो निजामविषयं संप्राप्य मुदितात्मसु । परावृत्तेषु ताम्रेषु पराक्रमणकारिषु ॥ २२ ॥
असमर्थमिवाऽऽत्मानं मन्यमानो महामतिः । तदिदं चिन्तयामास येदिलो निज-
चेतसि ॥ २३ ॥
समर्थैः समराम्भोधौ निजामो यैर्निमज्जितः । तेऽमी ताम्राननाः प्रायो मज्जयिष्यन्ति
मामपि २४ ॥
तस्मादमुं महाबाहुं मालवर्मात्मजं नृपम् । सहाय्ये स्वे निधास्यामि विधास्यामि विधि-
त्सितम् ॥ २५ ॥
पूर्वमस्यैवावलम्बादिभरामः पिता मम । विध्वस्ताराातिरध्यास्त निर्विशङ्कः स्वमा-
नसम् ॥ २६ ॥
सहसाऽवमतः सोऽयं मतिमन्दतया मया । मामुपेक्ष्य गतो मानादिभरामादनन्तरम् ॥२७॥
महामानी महाबाहुरसौ शाहमहीपतिः । कृत्वा मदधिकं स्नेहमिभरामेण वर्धितः ॥ २८ ॥
इति चेतसि संचिन्त्य महमूदो महाद्युतिः । अमात्यान् प्रेषयामास सद्यः शाहनृपं प्रति २९॥
अनुनीतः स तैस्तत्र मन्त्रिभिर्मन्त्रवेदिभिः । प्रतिजज्ञे महाबाहुर्येदिलस्य सहायताम्॥३०॥
अथ शाहमहीपालमवलम्ब्यावलम्बदम् । बत प्रतिपदं लेभे महमूदो महामुदम् ॥ ३१ ॥
अथो फरादखानस्य सुतं समरधूर्वहम् । निखिलानीकिनीमान्यं सेनान्यं रणदूल्हम् ॥३२॥
बलिना शाहराजेन महाराजेन संयुतम् । प्रतापी प्रेषयामास जेतुं कर्णाटनीवृतम् ॥३३॥
तदा फरादखानेन याकुतेनाङ्कुशेन च । हुशेन्यम्बरखानेन मसूदेन तथा पुनः ॥ ३४ ॥
प्रवारघाण्टिकेङ्गालगाढघोरफटादिभिः । सुभटैः सहितैस्तैस्तैः प्रतस्थे रणदूल्हः ॥ ३५ ॥
अथ सेनाधिपतिना सार्धं तेन महामनाः । बली भृशबलो राजा प्राप कर्णाटमण्डलम् ॥
ततो बिन्दुपुराधीशं वीरभद्रं महौजसम् । वृषपत्तनपालं च प्रसिद्धं केङ्गनायकम् ॥ ३७॥
कावेरीपत्तनपतिं जगद्देवं महाभुजम् । श्रीरङ्गपत्तनेन्द्रं च क्रूरं कण्ठीरवाभिधम् ॥ ३८ ॥
तञ्जापुरप्रभुं चापि वीरं बिजयराघवम् । तथा तञ्जीपरिवृढं प्रौढं वेङ्कटनायकम् ॥ ३९ ॥
त्रिमल्लनायकाह्वं च मधुरानाथमुद्धतम् । पीलुगण्डाखण्डलं च विकटं वेङ्कटाह्वयम् ॥४०॥

धीरं श्रीरङ्गराजं च विद्यानगरनायकम् । प्रसिद्धं तम्मगौडं च हंसकूटपुरेश्वरम् ॥ ४१ ॥
वशीकृत्य प्रतापेन तथाऽन्यानपि पार्थिवान् । शाहः संतोषयामास सेनान्यं रणदूल्हम् ॥
कृत्वाऽथ वीरसंहारकारि युद्धमहर्दिवम् । युद्धशौण्डात् किम्पगौण्डात् गृहीतं सुमनोहरम् ॥
रणदूलहखानेन पारिबर्हमिवार्पितम् । सोऽध्यास्त विजयी राजा बिङ्गरूळाभिधं पुरम् ॥ ४४ ॥
अथ तस्मिन् पुरवरे पटुप्राकारगोपुरे । सुधावदातसौधाग्रपताकोल्लिखिताम्बरे ॥ ४५ ॥
तत्तत्कारुकलाकीर्णरम्यहर्म्यमयान्तरे । विटङ्कस्थितबर्हिष्ठपारावतकृतस्वरे ॥ ४६ ॥
वातायनोत्पतन्नीलकण्ठकूजितपूजिते । विस्तीर्णापणविन्यस्तपण्यवस्तुसमन्विते ॥ ४७ ॥
प्रतिसद्मोल्लसत्कूपे विकसद्दीर्घदीर्घिके । नैकशृङ्गाटकोदञ्चज्जलयन्त्रोच्छलज्जले ॥ ४८ ॥
प्रफुल्लनिष्कुटकुटच्छायच्छन्नमहीतले । भित्तिविन्यस्तसच्चित्रलुभ्यल्लोकविलोचने ॥ ४९ ॥
नानावर्णाश्मसंबद्धस्निग्धसुन्दरमन्दुरे । विसंकटपुरद्वारकूटकुट्टिममण्डिते ॥ ५० ॥
चयाट्टमस्तकन्यस्तनालायन्त्रसुदुर्गमे । सभीकनिपुणानीकप्रकरप्रतिपालिते ॥ ५१ ॥
समन्तादतलस्पर्शपरिखावारिभासुरे । अपारसागराकारकासारपरिशीलिते ॥ ५२ ॥
अनिलोल्लासितलताललितोद्यानमण्डले । कनकाचलसंकाशदेवतायतनाञ्चिते ॥ ५३ ॥
संवसन् वासवसमः स एष नृपसत्तमः । निजैः परिजनैः सार्धं विविधं मुदमाददे ॥५४॥
स कदाचिन्मृगयया कदाचित् साधुसेवया । कदाचिदर्चया शंभोः कदाचित् काव्यचर्चया॥
कदाचिन्नर्तकीनृत्यदर्शनोत्सवलीलया । कदाचिन्नैकविधया शरसंधानशिक्षया ॥ ५६ ॥
कदाचिदायुधागारविन्यस्तायुधवीक्षया । कदाचिदात्मसंग्राह्यतत्तत्सैन्यपरीक्षया"॥ ५७ ॥
कदाचित् पुष्पितोद्दामनगरोद्यानयात्रया । कदाचित् सारसाक्षीभिः शृङ्गाररसदीक्षया॥५८॥
कदाचिद्योगशास्त्रोक्तकलया योगमुद्रया । प्रभुस्तत्तद्रसमयं समयं समनीनयत् ॥ ५९ ॥
जननी शंभुशिवयोस्तत्र यादवनन्दिनी । जग्राह हृदयं पत्युः शुद्धान्ते सुमहत्यपि॥६०॥
हलिना हरिणा चापि वसुदेवो यथाऽन्वहम् । व्यराजत तथा शाहः शंभुना च शिवेन च॥
स तु शंभोः कनीयांसं गरीयांसं गुणश्रिया । बहु मेने महाराजः शिवशर्माणमात्मजम् ॥
यदाप्रभृति संजातः स एष तनयः शिवः । तदाप्रभृति शाहस्य समृद्धाः सर्वसंपदः॥६३॥
अतिष्ठन् द्वारि बहुशो मन्दराचलसुन्दराः । विजिताम्भोरुहरुचो मदवारिमुचो गजाः॥६४॥
आसन्सहस्रशश्चापि मन्दुरायां मनोहराः । वाता इवाऽऽशुगतयः सैन्धवा समरोध्दुराः॥६५॥
ववृधे चाधिकं कोषस्तोषेण सह नित्यशः । प्रतापः पप्रथेऽत्यर्थं प्रभावश्च दिने दिने ॥६६॥
दुर्ग्रहाण्यपि दुर्गाणि सुग्रहत्वं प्रपेदिरे । विजयः सर्वदैवाऽऽसीत् स्वप्नेऽपि न पराभवः॥६७॥
पुष्पाणां च फलानां च सस्यानां चाभिवृद्धयः । साधनेन विना सिद्धिमीयुः सर्वाश्च
सिद्धयः ॥ ६८ ॥

एवं समृद्धतां नीतः पुराणपुरुषात्मना । सुतेन तेन सुतरां मुमुदे मालनन्दनः ॥ ६९ ॥
ततस्तं तनयं वीक्ष्य सगुणं सप्तहायनम् । लिपिग्रहणयोग्योऽयमिति भूपो व्यचिन्तयत् ॥
स तं पुत्रं मन्त्रिपुत्रैः सवयोभिः समन्वितम् । न्यवेशयत गुर्वङ्के मेधाविनमलोहलम्॥७१॥
आख्याति लिखितुं यावदाचार्यो वर्णमादिमम् । तावद्द्वितीयमप्येष विलिख्य तमदर्शयत्॥
सर्वासामपि विद्यानां द्वारभावमुपागताम् । लिपिं यथावदखिलां ग्राहयामास तं गुरुः ॥
तमथ सहजमेधाशालिनं सुस्वभावं नृपमृगपतिशावं वागगम्यानुभावम् ।
गुरुरुपचितचित्तः शिक्षितानां समूहे द्रुतधृतलिपिविद्यं वीक्ष्य वैलक्ष्यमूहे ॥ ७४ ॥

इत्यनुपुराणे सूर्यवंशे निवासकरकवीन्द्रपरमानन्दविरचितायामध्या-
यशतसंमितायां वैयासक्यां संहितायां कर्णाटविजयो
नाम नवमोऽध्यायः ।

## दशमोऽध्यायः ।

कवीन्द्र उवाच—

शिववर्मा यदा वर्षं द्वादशं प्रत्यपद्यत । तदा नृपः शाहवर्मा नियोगेन पिनाकिनः ॥ १ ॥
अमुं शंभुकनीयांसमाहूय शिवलक्षणम् । अर्कद्युतिमुदर्कज्ञः पुण्यदेशेश्वरं व्यधात् ॥ २ ॥

मनीषिण ऊचुः—

यथाऽऽदेशाद्भगवतो देवस्य त्रिपुरद्विषः । पुण्यदेशं प्रति नृपः प्रेषयामास तं शिवम् ॥ ३ ॥
यथा च पुण्यविषयं प्राप्तः स पितुराज्ञया । कवीन्द्र परमानन्द तथा त्वमभिधेहि नः॥४॥

कवीन्द्र उवाच—

एकदाऽभ्यर्च्य भवने भगवन्तं वृषध्वजम् । शयानः सुखशय्यायां सुकृती शाहभूपतिः॥५॥
प्रसन्नपद्मवदनं दशहस्तं त्रिलोचनम् । मन्दाकिनीजलस्निग्धजटाजूटमनोहरम् ॥ ६ ॥
शीतांशुशकलोत्तंसं त्रिपुण्ड्रललितद्युतिम् । हरिन्मणिनिभग्रीवं सरीसृपविभूषणम् ॥ ७ ॥
वराभयप्रदं वीरं विविधायुधधारिणम् । द्वीपिचर्मोत्तरासङ्गं द्विपचर्माधराम्बरम् ॥ ८ ॥
निदानं सर्वमुक्तीनां निधानं सकलश्रियाम् । योगिनं योगिनामिन्द्रमिन्द्रोपेन्द्रादिवन्दितम्॥
समस्तलोकसहितं सहितं गिरिकन्यया । अपश्यद्विस्मितः स्वप्ने पुरस्तात्त्रिपुरद्विषम्॥१०॥
दृष्ट्वा तमीश्वरं साक्षात्स्वयं समभिवन्द्य सः । पुरो बद्धाञ्जलिपुटस्तिष्ठति स्मातिनिर्वृतः॥ ११॥
ततः स भगवान् भर्गः स्वभक्तमवनीश्वरम् । वचनेनानुजग्राह निरवग्रहशक्तिभृत् ॥१२॥

ईश्वर उवाच—

सूर्यवंश्य महाबाहो शहाराज महामते। समाकर्णय मद्वाचमिमां कुशलमस्ति ते ॥ १३ ॥
य एष भ्राजतेऽभ्यर्णे कनीयांस्तनयस्तव । तमेनं लक्षणोपेतमवेहि पुरुषोत्तमम् ॥ १४ ॥
वर्धमानः क्रमेणैव त्वत्पुत्रोऽयमुरुक्रमः । समाक्रम्यावनीं सर्वां यवनान्निहनिष्यति ॥ १५ ॥
इयं भगवती देवी गिरिजा भक्तवत्सला । समये समयेऽभ्येत्य तमिमं पालयिष्यति ॥१६॥
हर्ता धरित्रीभारस्य संहर्ता प्रतिभूभृताम्। मद्भक्त एष सर्वेषामप्यधृष्यो भविष्यति ॥१७॥
तस्मादमुं महाबाहुं महाशयशिवाह्वयम्। पुण्यदेशाधिपत्येन महनीयेन योजय ॥ १८ ॥
तमित्युक्त्वा महेशानस्तदा मुक्तामयीं स्रजम्। तस्य राजकुमारस्य कण्ठे स्वयमयोजयत्॥१९॥
एवमाविर्भवद्धार्दभेरे देवे कपर्दिनि । प्राबुध्यत धरापालो मुहूर्ते ब्रह्मदैवते ॥ २० ॥
विशिष्टः स्वेन तपसा विस्मयाविष्टमानसः । तामेव मूर्तिमीशस्य ध्यायन्नेष मुहुर्मुहुः॥२१॥
प्रातः प्रभाकरं नाम प्रभाकरसमप्रभम् । पुरोहितं समानाय्य शशंस स्वप्नमात्मनः॥२२॥
अथानुमोदितस्तेन प्रहृष्टेन पुरोधसा । पुण्यदेशाधिपत्येन शाहः शिवमयोजयत् ॥ २३ ॥
अथ तस्मिन्नाधिपत्ये पित्रा दत्ते प्रतापिना । प्रयातुकामः स्वं राष्ट्रं शिवराजो व्यराजत ॥
ततः कतिपयैरेव गजवाजिपदातिभिः । मौलैराप्तैरमात्यैश्च ख्यातैरध्यापकैरपि ॥ २५ ॥
बिरुदैश्च ध्वजैरुच्चैः कोषेणापि च भूयसा । तथा परिजनैरन्यैरनन्यसमकर्मभिः ॥ २६ ॥
समवेतममुं शाहभूपतिः शोभने दिने । प्राहिणोत्पुण्यदेशाय पुण्यकारिणमात्मजम् ॥२७॥
ततः कतिपयैरेष दिनैर्दिनकृदन्वयः । अयाद्देशं महाराष्ट्रं तस्मात् कर्णाटमण्डलात् ॥२८॥
स शक्तित्रितयोपेतः समेतः सैन्यसंचयैः । शिवः स्वया श्रिया सार्धं पुण्याह्वं पुरमासदत्॥२९
चक्रप्रियकरः सद्यः समुल्लासितमण्डलम् । नावेदयदमुं लोकबन्धुं लोको व्यलोकत ॥३०॥
ततोऽनुकूलप्रकृतिः कुर्वन् प्रकृतिरञ्जनम्। अवर्धत क्रमेणैष विक्रमी यशसा सह ॥ ३१ ॥
महाराष्ट्रो जनपदस्तदानीं तत्समाश्रयात् । अन्वर्थतामन्वभवत् समृद्धजनतान्वितः॥३२॥
श्रयन्तः प्रश्रयोपेतं गुरवस्तं गुणैः सह । अनन्यनिष्ठमनसः समगच्छन् कृतार्थताम्॥३३॥
श्रुतिस्मृतिपुराणेषु भारते दण्डनीतिषु । समस्तेष्वपि शास्त्रेषु काव्ये रामायणे तथा ॥३४॥
व्यायामे वास्तुविद्यायां होरासु गणितेष्वपि । धनुर्वेदचिकित्सायां मते सामुद्रिके पुनः ॥
तासु तासु च भाषासु छन्दःसु च सुभाषिते । चर्यास्विभरथाश्वानां तथा तल्लक्षणेष्वपि ॥
आरोहणे प्रतरणे चङ्क्रमे च विलङ्घने । कृपाणचापचक्रेषु प्रासपट्टिशशक्तिषु ॥ ३७ ॥
युद्धे नियुद्धे दुर्गाणां दुर्गमीकरणेषु च । दुर्लक्ष्यलक्ष्यवेधेषु दुर्गमाभिगमेष्वपि ॥ ३८ ॥
इङ्गितेषु च मायासु विषनिर्हरणादिषु । तत्तद्रत्नपरीक्षायामवधाने लिपिष्वपि ॥ ३९ ॥
प्रवीणः स स्वयं तांस्तान् गुरून्गुरुयशोभरैः । अयोजयदभृशं तत्तत् प्रत्यभिज्ञानवान् विभुः॥

स एष यौवनारम्भे दधानोऽभिनवां श्रियम् । व्यभाद्यथा वासन्तविभवे सुरभूरुहः ॥४१॥
तमुल्लङ्घितकौमारमुद्भवन्नवयौवनम् । मीनकेतनलावण्यश्रीविलासमनोहरम् ॥ ४२ ॥
सती शीलवती रम्यरूपा चातिगुणोज्ज्वला । अभजद्भूपतिं भार्या प्रवारकुलसंभवा ॥ ४३॥
पूर्वजन्मप्रणयिनीं स इमां वरवर्णिनीम् । लब्ध्वा मुदमुपादत्त श्रीकृष्ण इव रुक्मिणीम् ॥

प्रादुर्भवत्प्राग्भवसंस्तवाभ्यां
मिथोऽनुकूलत्वमुपागताभ्याम् ॥
अधत्त ताभ्यामथ दंपतीभ्यां
संभूय शोभां महतीं त्रिवर्गः ॥ ४५ ॥

इत्यनुपुराणे सूर्यवंशे निवासकरकवीन्द्रपरमानन्दविरचितायां
मध्यायशतसंमितायां वैयासक्यां संहितायां शिवराजस्य
पुण्यदेशेश्वरत्वप्रदानं नाम दशमोऽध्यायः ॥ १० ॥

## एकादशोऽध्यायः ।

मनीषिण ऊचुः

संप्रेष्य पुण्यविषयं सनयं तनयं शिवम् । शाहराजः किमकरोत्कर्णाटविषये वसन् ॥१॥
कथं च महमूदोऽपि तस्मिन् विजितविद्विषि । प्रसिद्धायोधनोत्साहे शाहे स्वयमवर्तत ॥२॥

कवीन्द्र उवाच

षाड्गुण्यस्य प्रयोगेण तत्तन्मन्त्रबलेन च । वशी चकार सकलं शाहः कर्णाटमण्डलम् ॥३॥
प्रसूनमिव संप्राप्य प्रणयी प्रणतिस्पृशा । शिरसा प्रतिजग्राह जगद्देवोऽस्य शासनम् ॥४॥
दुर्धर्षोऽपि विधेयोऽस्य बभूव मधुराधिपः । प्रतिपेदे महाशूरपातिरप्यस्य वश्यताम् ॥५॥
रणदूलहखानेन खलेनापहृतं बलात् । भद्रासनं स्वमध्यास्त वीरभद्रोऽस्य संश्रयात् ॥ ६॥
तं तं मन्त्रं तत्र तत्र प्रयुञ्जानस्य धीमतः । बहवोऽस्यानुभावेन जहुर्यवनजं भयम् ॥७॥
शाहराजस्य मन्त्रेण भवन्नन्यसुदुःसहः । सर्वाणि स्वामिकार्याणि चकार रणदूलहः ॥ ८ ॥
अथ कालगतिं प्राप्ते सेनान्यां रणदूल्हे । कार्णाटकान्नरपतीन् स्ववशीकर्तुमञ्जसा ॥९॥
यं यं सेनापतिं तत्र प्राहिणोत् किल येदिलः । स स तत्काङ्क्षिताकाङ्क्षी शाहमेवान्ववर्तत ॥ १० ॥
ततो भृशबलं भूपं नियन्तुमनयं स्पृशन् । इभरामसुतो दर्पान्मुस्तुफाखानमादिशत् ॥११॥

अथाऽऽनकनिनादेन सागरं प्रतिगर्जयन् । जयशब्देन योधानां दिङ्मुखानि प्रपूरयन् ॥
तरलाभिः पताकाभिस्ताडितः परितर्जयन् । उदग्रैः शुण्डिशुण्डाग्रैर्मुदिरान् प्रतिसारयन् ॥१३॥
पांसुभिस्तुरगोध्दूतैः सप्तसप्तिं विलोपयन् । वाहिनीनिवहैरध्ववाहिनीः परिशोषयन् ॥ १४॥
निम्नोन्नतां वसुमतीमतीव समतां नयन् । प्रपेदे सप्रतिभटैर्वृतं कर्णाटनीवृतम् ॥ १५ ॥
ततः श्रुत्वा तमायान्तमनेकानीकपान्वितम् । प्राप्तसेनापतिपदं येदिलप्रत्ययास्पदम् ॥१६॥
प्रथितं मुस्तुफाखानं महामानं महान्वयम् । कपटानोकहभुवं खुरासानभुवां वरम् ॥१७॥
अविश्रब्धो पि विश्रम्भमात्मनः संप्रदर्शयन् । प्रत्युज्जगाम संरम्भात् ससैन्यःशाहभूपतिः ॥
अथाधिकाधिकं स्नेहं मिथो दर्शयतोस्तयोः । सख्योरिव महान् जज्ञे पथि संदर्शनोत्सवः ॥
उभावपि तदा तत्र वस्त्राण्याभरणानि च । कुंजरांस्तुरगांश्चोच्चैरन्योन्यमुपजह्रतुः ॥ २० ॥
तदानीं मुस्तुफानीकनिवेशस्यान्तिके निजाम् । सेनां निवेशयामास भूभृद् भृशबलो बली ॥
अद्राक्षीन्मुस्तुफाखानश्छिद्रान्वेषी यदा यदा । सन्नद्धमेव सुतरां शाहराजं तदा तदा ॥
प्रत्याययितुमात्मानं परिदर्शितसौहृदः । स तत्तत्कार्यकरणे शाहमेष पुरो व्यधात् ॥२३॥
प्रत्युत्थानेन तरसा दूरप्रत्युद्गमेन च । हस्ताश्लेषेण हर्षेण हस्तसंधारणेन च ॥ २४ ॥
अर्धासनप्रदानेन संमुखीभवनेन च । स्मितपूर्वेण वचसा तथा प्रीतिस्पृशा दृशा ॥ २५ ॥
तत्तन्मन्त्रप्रयोगाणां प्रकाशकरणेन च । तेषु तेषु च कार्येषु पुरस्कारेण भूयसा ॥ २६ ॥
अर्हेण परिबर्हेण संस्तवेन स्तवेन च । परिहासरसेनोच्चैरध्यात्मकथनेन च ॥ २७ ॥
हिताहितोद्भावनेन स्ववृत्तावेदनेन च । यवनः सोऽन्वहं तस्मै प्रत्ययं समदर्शयत् ॥२८॥
ततः स पृतनापालः समस्तान् पृतनापतीन् । आनाय्य न्यायनिपुणो विविक्ते वाक्यमब्रवीत् ॥

मुस्तुफाखान उवाच—

यस्यान्नं भुज्यते येन मनुजेनानुजीविना । तस्य यो स भवेदात्मा नादसीयः कदाचन ॥
न महत्त्वं विना विद्यां न काव्यं प्रतिभां विना । कदाचिदपि नाभीष्टं दृष्टं स्वामिकृपां विना ॥ ३१ ॥

तस्माद् यः स्वामिनोऽर्थाय त्यजत्यात्मानमात्मनः । तमेव धन्यमित्याहुर्नीतितन्त्रविदो जनाः ॥ ३२ ॥
न बान्धवो न च सखा न संबन्धी न सोदरः । न पिताऽप्यनुरोद्धव्यः स्वामिसेवापरात्मभिः ॥ ३३ ॥
यस्मिंस्तुष्टे तुष्टिमेति यस्मिन् रुष्टेऽस्तमेति च । तमनन्येन मनसा न विषेवेत कः पुमान् ॥ ३४ ॥

सर्वेऽपि वयमेतर्हि नियमे महति स्थिताः। संभूय महमूदस्य हिताय प्रयतेमहि ॥ ३५ ॥
यदद्य स्वामिना स्वेन महमूदेन मानिना। निग्राह्यः शाह इति वै संदेश्याऽऽवेदितं मयि ॥
[illegible]ी भृशबलो भूपः स यावन्नावबुध्यते। तावत्तद्धि विधातव्यमस्माभिः स्वहितार्थिभिः ॥
निशीथिनीमतीत्येमां महत्युषसि संहताः। सहिताः सैनिकैः स्वैः स्वैस्तान्निगृह्णीत पार्थिवम् ॥ ३८ ॥
इत्थमावेदितास्तेन मुस्तुफेनार्थसिद्धये। पृतनापतयः स्वं स्वं शिबिरं प्रतिपेदिरे ॥ ३९ ॥
मन्त्रमेतमविन्धास्ते निशि यस्याममन्त्रयन्। तस्यामेव महोत्पाताः शाहस्य शिबिरेऽभवन् ॥
सप्तयो दृक्पयोऽमुञ्चन्नरणन् करुणं गजाः। अतर्कितमभज्यन्त क्रूरारवकृतो ध्वजाः ॥
चक्रिरेऽनाहता एव पटहाः क्रूरमारवम्। रजसा सहसाऽऽवर्तं वितेने वातमण्डली ॥ ४२ ॥
अभ्रोदराद्विनैवाभ्रं करकाः परितोऽपतन्। विनैवाम्भोधरं व्योम्नः प्रादुरासीदिरंमदः ॥
न प्रदीपनवेलायां प्रदीपाः प्रदिदीपिरे। न प्रसेदुर्मनुष्याणां वदनानि मनांसि च ॥
अकारि पृतनोपान्ते शिवाभिरशिवो रवः। श्वभिरूर्ध्वमुखीभूय चक्रन्दे चातिनिन्दितम् ॥
मुहुरभ्यर्णमभ्येत्य घूको घूत्कारमातनोत्। तथा वृकगणः क्रूरमारवं सहसाऽकरोत् ॥
चकम्पिरे सुमनसां प्रतिमाः प्रतिमन्दिरम्। अकस्मादर्धरात्रे च गौश्चक्रन्द निकेतगा ॥
इमान्यासन्निमित्तानि भयशंसीनि भूरिशः। तथाऽप्यवहितो नाभूद्भूपः स नियतेर्वशः ॥ ४८ ॥

सज्जीभूय निजे निजेऽद्य शिबिरे तिष्ठन्त्यनीकाधिपाः
सार्धं यैर्व्यदधान्निशार्धसमये मन्त्रं चिरं मुस्तुफः।
आगत्येति निवेदितं प्रणिधिभिः श्रुत्वाऽतिसत्त्वाधिको
दैवायत्ततया न शाहनृपतिश्चक्रे तदात्वोचितम् ॥ ४९ ॥

इत्यनुपुराणे सूर्यवंशे निवासकरकवीन्द्रपरमानन्दविरचितायामध्यायशतसंमितायां वैयासक्यासंहितायां [ शाहस्य दुर्निमित्ताविर्भावो नाम ] एकादशोऽध्यायः ॥ ११ ॥

## द्वादशोऽध्यायः

अथ कोकवियोगार्तिहरे बन्धूकभास्वरे। पूर्वपर्वतशृङ्गाग्रमारुरुक्षति भास्करे ॥ १ ॥
प्रभातसंध्यारागेण रञ्जिते गगनाङ्गणे। तमस्तमीचरमुखप्रमुक्ते ककुभाङ्गणे ॥ २ ॥
दरान्दोलितपम्पाम्भःकणसंपर्कशीतले फुल्लदम्भोरुहामोदमधुरे वाति मारुते ॥ ३ ॥
देलावरो मसूदश्च सरजा याकुतोऽम्बरः। अदवन्यधिनाथश्च तथा कर्णपुराधिपः ॥ ४ ॥

फरादः कैरतश्चोभौ तथा याकुतसारभिः । आजमो बहुलोलश्च मानी मलिकराहनः ॥
राघवो मम्बतनयो वेदजिद्भास्करात्मजः । सुतो हैबतराजस्य बल्लालश्च महाबलः ॥ ६ ॥
त्रयोऽप्येतेऽग्रजन्मानः सैनिकाग्र्याः सुदुर्मदाः । प्रवारौ सिद्धमम्बाह्वौ मम्बो भृशबलस्तथा ॥ ७ ॥
अन्येऽप्यनीकपतयः तत्तदन्वयसंभवाः । तदा युद्धमदावेशवशात्मानो महायुधाः ॥ ८ ॥
कम्पयन्त इवाऽऽकाशं पताकापटमण्डलैः । क्षोदयन्त इव क्षोणीं चलैर्हयखुराञ्चलैः ॥ ९ ॥
दिधक्षन्त इवाशेषां त्रिलोकीं तेजसां चयैः । प्राकारमिव कुर्वन्तः परितः प्रबलैर्बलैः ॥
धावका इव दीव्यन्तः कृतान्त इव निर्भयाः । शिबिरं शाहराजस्य रुरुधुर्मुस्तुफाज्ञया ॥
असंनाहितमातङ्गमपल्याणितसैन्धवम् । असज्जयोधसंदोहमसुप्तोत्थितनायकम् ॥ १२ ॥
यामिनीजागरोद्दामक्लमनिद्राणयामिकम् । शिबिरं तत्तदातङ्कवशाद्वैहस्त्यमाददे ॥ १३ ॥
परिवेषेण महता बिम्बमंशुमतो यथा । शुशुभे प्रतिसैन्येन शाहस्य शिबिरं तथा ॥ १४ ॥
सर्वतस्तस्य सैन्यस्य सागरस्येव गर्जतः । पार्ष्णिग्राहः स्वयमभून्मुस्तुफो वाहिनीश्वरः ॥
अथ खण्डजिता चाम्बुजिता मानजिता तथा । सहितो बन्धुभिश्चान्यैः सैनिकैश्च समन्ततः ॥ १६ ॥
चन्द्रहासधरैश्चापधरैः प्रासधरैरपि । अग्नियन्त्रधरैश्चक्रधरैश्च पुरुषैर्वृतः ॥ १७ ॥
घोरकर्मा घोरफटो बाजराजो महाभुजः । वाडवो जसवन्तश्च वाडवाग्निरिवापरः ॥ १८ ॥
मल्लजिन्नरपालश्च प्रवारकुलदीपकः । ख्यातश्च तलजिन्नाम नृपो भृशबलान्वयः ॥ १९ ॥
अध्यासितसगर्वार्वखुरक्षुण्णवसुंधराः । विविशुः शाहशिबिरं सर्वेऽमी बलिनां वराः ॥
ते तदाऽतीव गर्जन्तो जिगीषन्तो महामदाः । सुप्तं प्रबोधयामासुः शाहं सिंहमिव द्विपाः ॥
शाहः प्रबुद्धमात्रस्तु निशम्याऽऽगमनं द्विषाम् । सज्जमानः शशासोच्चैः सज्जध्वमिति सैनिकान् ॥ २२ ॥
अश्वोऽश्वोऽसिरसिः प्रासः प्रास इत्यादयस्तदा । आरवाः समजायन्त शिबिरे शाहाभूभृतः ॥ २३ ॥
अथ शाहे महाबाहौ सज्जमाने महौजसि । अदर्शाय महासैन्येऽप्याकस्मिकभयस्पृशि २४
कण्ठीरव इवाकुण्ठगतिः संयति संयति । खण्डपाटल एवैको ययौ घोरफटान् प्रति ॥ २५ ॥
आमुक्तकवचः श्रीमानभेद्यफलकोद्धुरः । कृतहस्तः कुन्तधरः कृपाणी कर्मकोविदः २६॥
स तूर्णं तुरगारूढो रणाङ्गणमगाद्यदा । सिंहनादं नदन्ति स्म बाजराजादयस्तदा ॥२७॥
ततो घोरफटानीकपतयोऽतिरयोद्धताः । तं पाटलकुलोत्तंसं रुषा रुरुधिरेऽभितः ॥ २८ ॥

स तदाऽभ्रंलिहं भल्लं भ्रामयामास भासुरः । कारयामास चाश्वेन मण्डलानि सहस्रशः ॥२९॥
तद्भ्रामितस्य भल्लस्य परिभ्रान्ता नभोन्तरा । दिनेशमण्डलाकारा दिदीपे द्युतिमण्डली ॥
तैस्तैः प्रहरणैस्तत्र प्रहरन्तो महायुधाः । खण्डशः खण्डशः क्रोधात्तेन भल्लभृता कृताः ॥३१॥
कुप्यता पविहस्तेन पर्वता इव पातिताः । प्रतिप्रतीकं त्रुट्यन्तः पेतुरुर्व्यामनेकशः ॥३२ ॥
रोषदष्टाधरैर्धीरैरायोधनपरैः परैः । प्रसभं प्रहृतोऽप्येष पौरुषं स्वमदर्शयत् ॥ ३३ ॥
स ततः स्वेन भल्लेन निशितेनाऽऽयतेन च । जहार कस्यचित्तस्य शिरोऽद्रिशिखरोपमम् ॥
तथैव कस्याचिद्वक्षः शिलातलमिवाऽऽयतम् । अभेद्यमपि संरम्भाद् बिभेद बलिनां वरः ॥
स भल्लफलकाघातपतिताश्वस्य कस्यचित् । कुम्भिकुम्भोपमं सद्यः स्कन्धकूटमपातयत् ॥३६॥
कस्यचिच्चरणद्वंद्वं वलग्नं चापि कस्यचित् । कस्याचित् कण्ठनालं च चिच्छेद किल खण्डजित्
उत्पत्योत्पत्य भल्लेन पातयन्परितः परान् । एकोऽपि पाटलः प्राप तत्र चित्रमनेकताम् ॥
अभियातारिसंघातशातहेतिशताहतः । स भिन्नवारबाणोऽरिवारणान् प्रत्यवारयत् ॥ ३९ ॥
स विपक्षविनिर्मुक्तविशिखक्षतविग्रहः । शुशुभे लोहितार्द्राङ्गो लोहिताङ्ग इव ग्रहः ॥४०॥
युध्यतः पाटलस्यास्य दृष्ट्वा पाटवमद्भुतम् । क्ष्वेडितास्फोटितं चक्रुर्बाजराजादयो भटाः ॥
परमानजिता मानाजिता भल्लभृता युधि । भिन्नभल्लस्य जग्राह करे क्रूरां कृपाणिकाम्॥४२॥
कृतहस्तं खड्गहस्तं ततस्तं प्रेक्ष्य सस्मितः । बाजराजो महाबाहुराजुहाव महाहवे ॥४३ ॥
कालदण्डकरालेन करवालेन पाटलः । तदा प्रहारमकरोद्बाजराजस्य वक्षसि ॥ ४४ ॥
तेनाऽऽघातेन महता प्रहतायतवक्षसि । बाजराजे महाबाहौ मोहमुद्रामुपेयुषि ॥ ४५ ॥
अम्बुजित्परिघं घोरं मानजिन्मुद्गरं तथा । मल्लजिच्च सितां शक्तिं शिखां शैखावतीमिव ॥
बलजिद्भल्लमतुलं जसवन्तश्च सायकम् । खण्डाजिच्च प्रचिक्षेप खड्गं खण्डाजितं प्रति ॥४७॥
स भीमेन समस्तानि समस्तानि समन्ततः । आपतन्त्यायुधीयानामायुधानि समं ततः ॥४८॥
द्विधा चक्रेऽसिना स्वेन कानिचिच्च त्रिधा त्रिधा । कानिचित्पञ्चधा चापि नवधा दशधा तथा ॥
बाजराजः क्षणं मूर्छां क्षणं सर्वविलक्षणम् । अनुभूय स्वयं भूयः प्रत्ययुध्यत पाटलम् ॥५०॥
अथ स्वया प्रतिभया परप्रतिभयाकृतिम् । बाजराजो गदामुर्वीं पातयामास पाटले ॥ ५१ ॥
क्रूरया कार्तिकेयस्य शक्त्येव क्रौञ्चपर्वते । बाजराजस्य गदया तया भित्त्वा निपातिते ॥५२॥
त्रिदशस्यन्दनारूढे सुभटे खण्डपाटले । हन्यमानेन सैन्येन स्वसैन्ये चातिविह्वले ॥ ५३ ॥
द्रुतसंबद्धशीर्षण्यस्रस्तोष्णीषपटाञ्चलः । चर्मवान् वर्मवानुच्चः शरासनवतां वरः ॥ ५४ ॥
कुन्तयोधी मण्डलाग्रमण्डलीकारपारगः । शाहराजो महाबाहुर्महाराजो महाहवः ॥५५ ॥
अधिरुह्य महावाहमम्बुवाहमिवाम्बुदः । सपदि प्रतिजग्राह बाजराजं जिघांसया ॥ ५६ ॥
भाभीरराजो दशजिद्दशदिग्जयकारकः । योगाजिच्च धनुःकाण्डधरो भाण्डकरान्वयः ॥

गुञ्जावटकरः सन्तो मेघजिट्ठक्कुरस्तथा। भ्राता त्र्यम्बकराजश्च दत्तराजश्च दर्पितः॥५८॥
अन्येऽप्यनीकपतयः शाहराजं समन्ततः। जुगुपुः शतशस्तत्र पृष्ठगोपाश्च भूरिशः॥५९॥
तमथाऽऽकृष्टकोदण्डटंकारोट्टङ्किताम्बरम्। वीरं कण्ठीरवग्रीवं वृषस्कन्धं महौजसम् ॥६०॥
दत्तत्र्यम्बकराजाभ्यां भ्रातृभ्यां परिवारितम्। सैनिकैः स्वैः परिवृतं सुरैरिव शतक्रतुम् ॥
मरुता प्रतिकूलेन सपदि प्रतिवारितम्। ददृशुः शाहनृपतिं बाजराजादयो नृपाः ॥६२॥
शाहराजोऽप्यभिप्रेक्ष्य प्रतिपक्षानुदायुधान्। नादयन्मेदिनीं द्यां च सिंहनादमनीनदत्॥
शाहस्य तेन नादेन पूरिताः ककुभोऽभवन्। प्रतिदध्वान चाम्बोधिः सपदि क्षुभितोऽभवत्॥
न सेहे बाजराजेन शाहराजस्य गर्जितम्। प्रमत्तेन द्विपेनेव प्रमत्तद्विपबृंहितम् ॥ ६५ ॥
अथ घोरपटैर्घोरवज्रनिर्घोषघोषिभिः। अभ्येत्य ज्ञापितस्वस्वनामभिः प्रौढधामभिः ॥६६॥
चारुचर्मभिरामुक्तवर्मभिः कृतकर्मभिः। परिवव्रेतरां शाहस्तोयदैरिव चन्द्रमाः ॥ ६७ ॥
तदा त्र्यम्बकदत्ताह्वौ राजानौ दशजित्तथा। मेघजिच्च महाबाहुर्महासेनसमप्रभः ॥६८॥
योगजिच्च तथाऽन्येऽपि गुञ्जावटकरादयः। प्रत्यगृह्णन् प्रतिभटान् शाहराजपरीप्सया॥६९॥
ततस्त्र्यम्बकराजेन चापहस्तेन मानजित्। खलखण्डजिता दत्तराजेनापि च खण्डजित् ॥
प्रतिमल्लजिता योगजिता च सह मल्लजित्। तथा मेघजिता मेघनादसाम्यभृताऽम्बुजित् ॥
युयुधे शाहराजेन बाजराजः पराक्रमी। अन्ये चान्यैश्च बहवो बहुभिर्दीर्घबाहुभिः॥७२॥
टंकार्थं चापमन्योन्यं जिगीषन्तो मदोत्कटाः। रणरङ्गे नटन्ति स्म नटा इव महाभटाः ॥
पत्तिभिः पत्तयस्तत्र सप्तिभिः सप्तयस्तथा। द्विपैर्द्विपाश्च बहवः ससञ्जुर्विजिगीषया ॥
शक्तिभिः शक्तयो गाढमुष्टिभिर्गाढमुष्टयः। परिघाः परिघैर्घोरैर्मुद्गरैर्मुद्गरास्तथा ॥ ७५ ॥
पट्टिशाः पट्टिशैस्तीव्रैस्तोमरैरपि तोमराः। गदाभिश्च गदाश्चक्रैश्चक्राणि च सहस्रशः ॥
सायकाः सायकैस्तीक्ष्णैः कटारैश्च कटारकाः। तदानीमभ्यहन्यन्त भल्लैर्भल्लाश्च भूरिशः ॥
शिरांसि सशिरस्त्राणि सतनुत्राण्युरांसि च। पाणयः सतलत्राश्च सकेयूराश्च बाहवः॥७८॥
सपताको ध्वजश्चापि सशरं च शरासनम्। हयश्च सहयारोहः करी च सनियन्तृकः ॥
इमानि द्विषदुन्मुक्तशस्त्रच्छिन्नान्यनेकशः। तदानीमपतन् भूमौ पक्षयोरुभयोरपि ॥८०॥
शरासनानि कर्षन्तः साङ्गुलीयकपाणयः। पृथुस्कन्धाः कबन्धाश्च मत्यधावन्नितस्ततः ॥
यस्य येन शिरश्छिन्नं यद्यदङ्गमपात्यत। तस्य तत्तत्तदोत्पत्य बत तं मत्यधावत ॥ ८२ ॥
अथाश्वेभ्यः करिभ्यश्च नरेभ्यश्च शितैः शरैः। कर्त्यमानशरीरेभ्यः प्रवृत्ते रुधिरह्रदे ॥८३॥
मज्जामांसवसामेदोमेदुरे मेदिनीतले। नटन्तीभिः पिशाचीभिः प्रहृष्टे डाकिनीकुले ॥८४॥
तत्तत्पताकिनीपालकपालकृतकुण्डले। भैरवीभिः समं भूरिमत्ते भैरवमण्डले ॥ ८५ ॥
चण्डदीधितिभिर्वीरमुण्डमालामनोहरे। भूतैः समुदिते चातिमुदिते चन्द्रशेखरे ॥ ८६ ॥

राज्ञा खण्डजिता तत्र दत्तराजे विहस्तिते । बत त्र्यम्बकराजे च राज्ञा मानजिता जिते ॥
त्र्यम्बकभुजिदुन्मुक्तहेतिपातपराहते । भीते मेघजिति ह्रीते दशजित्यपि विद्रुते ॥ ८८ ॥
अन्यस्मिन्नपि सैन्ये स्वे हीयमाने भयाकुले । कुम्भोद्भवेन मुनिना पीयमान इवार्णवे ॥
तथा मल्लजितः काण्डकुलैर्भाण्डकरेऽर्दिते । शाहराजः शितैर्बाणैर्बाजराजमवाकिरत् ॥९०॥
बाजराजस्तु विक्रान्तस्तैर्नितान्तशितैः शरैः । शीर्यमाणशरीरोऽपि न मुमोह महोर्मिभिः ॥
ततः स तत्र संप्रेक्ष्य प्रस्फुरद्वर्म सान्तरम् । ताडयामास भल्लेन शाहराजभुजान्तरम् ॥
कुशलो युद्धविद्यायां कुलिशाभेद्यविग्रहः । तेन मल्लाभिघातेन शाहराजो न विव्यथे ॥९३॥
अथ प्रकटितक्रोधैर्योधैर्मानाजिदादिभिः । शरशक्तिगदाखड्गभल्लाद्यायुधधारिभिः ॥९४॥
बाजराजं पालयद्भिर्दर्शयद्भिः स्वपौरुषम् । परिवव्रे महाराजः शाहराजः पराक्रमी ॥ ९५ ॥
तत्र कालानलज्वालासमस्पर्शधरैः शरैः । तापयामास तान् सर्वान् प्रतापी स महीपतिः ॥
तदानीं शाहराजेन शरैः स्वैः शकलीकृताः । स्रस्तबाहुलतास्तत्र स्रवल्लोहितलोहिताः ॥९७॥
चण्डवाताहताः सद्यः पुष्पिता इव किंशुकाः । शतशः सैनिकाः पेतुर्बाजराजस्य पश्यतः ॥
उत्पतत्तुरगारूढो यत्र यत्रोत्पपात सः । तत्र तत्र परित्रस्य प्रतिवीराः सहस्रशः ॥ ९९ ॥
पर्वता इव संशीर्णाः पविपातपराहताः । समजायन्त दशधा शतधा च सहस्रधा ॥ १०० ॥
ततः परिचरं कश्चित्कश्चित्सहचरं पुनः । वर्म चाप्रतिमं कश्चित्कश्चिच्चर्म सचन्द्रकम् ॥
ततो घोरपटः कश्चिदिषुधिं च शरासनम् । चिच्छेद शाहराजस्य कश्चिच्च ध्वजमुन्नतम्
अथारिपातितापारहेतिपातप(प्र)तापता(ना)त् । तूर्णमुत्पत्य तुरगादुरगारातिचेष्टिते ॥१०३॥
शराचितशरीरोत्थलोहितद्रवलोहिते । प्रभूतप्रधनोद्भूतपरिश्रमविमोहिते ॥ १०४ ॥
महाराजे महाबाहौ परिरब्धमहीतले । क्ष्वेडितास्फोटितावेशपरे च परमण्डले ॥ १०५ ॥
हाहाकारस्तदाऽत्युच्चैरभूद्धार्शबले बले । तत्र धर्मधनं धीरं धर्मराजसमश्रियम् ॥ १०६ ॥
सर्वस्वमिव लोकस्य सर्वस्यापि समाश्रयम् । तं महीतलसंलग्नं मग्नं मोहमहोर्मिषु ॥ १०७ ॥
देवाद्दिवस्तटाद्देवं दिवाकरमिव च्युतम् । रयाद्धयादवप्लुत्य बान्धवत्वं प्रकाशयन् ॥
फलकेन स्वकीयेन ररक्ष बलजिद्बली । अथ शाहं महाबाहुं बाजराजः स्मयं तथा ॥
निश्वसन्तं निजग्राह नागं जाङ्गुलिको यथा । ततो हस्तिनमारोप्य नीयमानमरातिभिः ॥
श्रितमूर्छासुखं शुष्कमुखं मुद्रितचक्षुषम् । पञ्चाननमिवाऽऽनीय पञ्जराभ्यन्तरेऽर्पितम् ॥
निकृतं निकृतिज्ञेन मुस्तुफेन दुरात्मना । शाहभूभृतमालोक्य भृशमाचुक्रुशुर्जनाः ॥ ११२ ॥
प्यधत्त यवनः स्वेन कपटेन पटेन यम् । नयं न वेद तं विद्वान् शाहः सर्वविदप्ययम् ॥
ः स्वामिकार्यार्थी पस्पर्श स्रुतमातशम् । अहो विश्रम्भणायास्य ललङ्घे च स्वपुस्तकम्
तं यवनं तत्र जगर्हे जनताऽभितः । स तु स्वस्वामिकार्यार्थी कृतकृत्योऽभवत्ततः ॥

न पल्याणं न तुरगो न करी न क्रमेलकः । नाऽऽयुधं नाऽऽयुधीयश्च न वाद्यं न च वादकः॥
न मञ्चको न चोल्लोचो न पताका न च ध्वजः । न विक्रेयं न विक्रेता नेन्धनं न च कीलकः॥
न काण्डपटकस्तत्र न चाऽऽसीत्पटमण्डपः । तथाऽभवत् क्षणार्धेन शाहस्य शिबिरं तदा॥
अमीभिः संवर्तानलनिभबलैर्मुस्तुफमुखैश्चभूपालैः कालैरिव युधि निलिम्पाधिपबलम् ।
अमुं शाहं साहंकृतिमिति नितान्तं नियमितं स्वदूतेभ्यः श्रुत्वा मनसि महमूदेन मुमुदे॥

इत्यनुपुराणे सूर्यवंशे निवासकरकवीन्द्रपरमानन्दविरचितायामध्या-
यशतसंमितायां वैयासक्यां संहितायां शाहराजनिग्रहो नाम
द्वादशोऽध्यायः ॥ १२ ॥

## त्रयोदशोऽध्यायः ।

मनीषिण ऊचुः—

अथ स्वपितरं श्रुत्वा निगृहीतमरातिभिः । शंभुराजः किमकरोत्तथा शिवमहीपतिः ॥१॥
तं निगृह्य महाराजं मुस्तुफो वाहिनीपतिः । व्यधत्त किमधर्मात्मा महमूदश्च दुर्मतिः ॥
कवीन्द्र उवाच—
शंभुः स्वपितरं श्रुत्वा निगृहीतमरातिभिः । चुकोप मुस्तुफायोच्चैर्बिङ्गरूरं पुरं श्रयन् ॥
निशम्य शिवराजोऽपि शाहराजदशामिमाम् । येदिलस्यापकाराय प्रतिजज्ञे प्रतापवान् ॥
मुस्तुफस्तु महामानी बिङ्गरूरजिघृक्षया । रयान्नृपं तानजितं ङुरान्वयधुरंधरम् ॥ ५ ॥
तथा विठ्ठलगोपालं विप्रं क्षात्त्रोपजीविनम् । प्रौढं फरादखानं च सद्यः प्रस्थातुमादिशत् ॥
तदानीं महमूदोऽपि मेधावी पृतनापतीन् । योगमाज्ञापयामास शिवस्य विषयं प्रति ॥७॥
अथ सेनापतिर्नाम फत्तेखानो महामनाः । मिनादरतनौ शेखौ फत्तेखानश्च कोपनः ॥८॥
क्रूरो शरफशाहश्च धन्वधारी यशोधनः । संनाहसहिता एते यवनाः सज्जसाधनाः ॥ ९ ॥
घाण्टिको मत्तराजश्च कुलिशोपमसायकः । तथा फलस्थानपतिर्बलवान् बाजनायकः॥१०॥
समन्ताः शतशश्चान्ये स्वर्णपृष्ठशरासनाः । स्वर्णसारसनाः स्वर्णवसनाः स्वर्णकेतनाः॥११॥
स्वर्णचन्द्रकमुद्राङ्कफलकद्युतिशालिनः । तस्थुराक्रम्य तरसा पुरं विल्वसरोभिधम् ॥१२॥
तथा हैबतराजस्य सुतो बल्लालसंज्ञकः । कृतहस्तः कृती क्रूरकर्मा द्रौणिरिवापरः ॥१३॥
सिंहसंहननोऽनेकैरनीकैः परिवारितः । पुरं शिरोबलं प्राप शिवसैन्यैरवारितः ॥ १४ ॥
पुरंदरशिरोवर्ती पुरंदरसुतोपमः । तदा तदागमं श्रुत्वा शिवः स्मेरनताननः ॥ १५ ॥

संनाहवान् धनुर्बाणपाणिः संनद्धसाधनः। सीरायुधसमान् धीरान् स्ववीरानिदमब्रवीत् ॥
शिव उवाच—
विश्वस्तो मुस्तुफाखाने महाराजः पिता मम। अहो व्यसनमापन्नः संपन्नः संपदा त्वया ॥
न विश्वसेदविश्वस्ते विश्वस्तेऽपि न विश्वसेत्। विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ॥
इति व्यासस्य वचनं श्रुतवानपि पार्थिवः। अविश्वास्यतरे तस्मिन्नहो विश्वस्ततां गतः ॥
अविज्ञातेङ्गितगतिः श्रितयेदिलशासनः। निजग्राह महाराजं मुस्तुफो यवनाधमः ॥२०॥
विश्वस्तः स्वर्णहरिणे हरिणाक्ष्या प्रणोदितः। वञ्चितो दशवक्त्रेण सोऽपि दाशरथिर्नृपः॥
अतिविश्रब्धतां नीत्वा विप्रलब्धो मरुत्वता। पपात त्रिदिवात्तूर्णं ययातिर्नहुषात्मजः॥२२॥
सहजं कवचं बिभ्रद्विश्वस्तो बलविद्विषा। तथा स विहितः कर्णः पार्थेन निहतो यथा ॥
विश्वस्तो धर्मराजोऽपि भरतानां धुरंधरः। सुयोधनसहायेन द्यूते शकुनिना जितः ॥२४॥
अतो वैरिषु विश्वासं न कुर्वीत विचक्षणः। येन सम्यगधीतोऽस्ति राजधर्मः सलक्षणः ॥
हालाहलधराश्लेषो हालाहलविषेवणम्। विद्विषत्सु च विश्वासस्त्रयमेतत्समं स्मृतम् ॥२६॥
लालनं कपिबालानां कालपन्नगचालनम्। तथा स्यादपकाराय खलप्रणयपालनम् ॥२७॥
यथाऽन्धमन्दिरालिन्दमध्यदीपकदीपनम्। यथा स्रोतस्विनीस्रोतः सिकतासेतुबन्धनम् ॥
यथा शकलितानर्घ्यमुक्तासंधानसाधनम्। यथा च जगति ख्यातं कदलीकाण्डदारणम् ॥
यथा ह्याकाशखननं यथा सलिलताडनम्। तथा परिश्रमायैव भवेदसदुपासनम्॥ ३० ॥
द्विषि विश्वसता येन नीतिशास्त्रं न तत्स्मृतम्। किं तेन खदिराङ्गारपर्यङ्कशयनं कृतम् ॥
भवेद्यदि सतृष्णस्य वैतृष्ण्यं मृगतृष्णया। तर्हि स्यादेव निखिलं कुशलं खलसेवया॥३२॥
सुषिरान्वेषणपरः परस्पर्धाकरः खलः। अहितोऽप्यहितो ज्ञेयो नावज्ञेयो विजानता ॥३३॥
रक्षितं राष्ट्रमखिलं वाक्यं च परिपालितम्। अमुष्य महमूदस्य महाराजेन किं कृतम् ॥
हितानामहितो भूत्वा महितोऽपि स्वया श्रिया। अहो येदिलशाहोऽयं न सीदति निराश्रयः॥
रुद्धः फरादखानाद्यैर्विरुद्धैरुद्धतस्मयः। योत्स्यते तत्र मे भ्राता बिङ्गरूरपुराश्रयः ॥३६॥
इमानि गिरिदुर्गाणि पालयन्नातिनिर्वृतः। योत्स्येऽहमहितैरत्र संनद्धानीकसंयुतः ॥ ३७ ॥
अहमत्र स्वयं तत्र शंभुराजः पराक्रमी। मोचयिष्यावहे तातं युध्यमानावुभावपि ॥३८॥
अथास्मदभिभूतात्मा महमूदः सुदुर्मदः। सहैव स्वेन दर्पेण महाराजं विमोक्ष्यति ॥३९॥
स्वेन धर्मेण सहितं महितं तातमावयोः। महमूदो न चेन्मोक्ता तर्हि भोक्ता स्वकर्म तत् ॥
यर्हि मोहान्महाराजं येदिलः प्रहरिष्यति। तर्हि तं सहितं सद्यस्तात एव हनिष्यति ॥४१॥
अनारतं मनो येषां धर्मपाशनिबन्धनम्। अलं न तेषां बन्धाय कारागारादिबन्धनम्॥४२॥
गृहीता महिता लोके जयवल्ली मया पुरा। स्थापितश्चन्द्रराजश्च तस्यां तदभिलाषुकः ॥

घोरात्मानो घोरफटाः कुपिता इव पन्नगाः। मां जाङ्गुलिकमालोक्य महतीं शान्तिमागताः॥
प्रस्थाय प्रधनाय द्राङ्मया विद्रावितः पुरा। जीवन्नादाय मुक्तश्च फलस्थानपुरेश्वरः॥
एतेऽधुना समुदिताः फत्तेखानादयो भटाः। योत्स्यन्तेऽस्मान्समासाद्य द्विपा इव मदोत्कटाः॥
बलीयानेष बल्लालः पालयन् प्रबलं बलम्। मन्यते बहुमात्मानं समादाय शिरोबलम्॥
अतो द्रुतमितो गत्वा तमेव बलिनां वरम्। विनिगृह्य भवन्तोऽद्य मोचयन्तु शिरोबलम्॥
अथ श्वो वा परश्वो वा फत्तेखानं महाबलम्। अत्र वा तत्र वा वीक्ष्य प्रतियोत्स्यामहे वयम्॥

कवीन्द्र उवाच—

शिवस्येति वचः श्रुत्वा सैनिकास्ते सहस्रशः। पुष्करं पूरयामासुः सिंहनादेन भूयसा॥५०॥
अथारातिप्रमथनो जगत्स्थापकवंशजः। प्रवृद्धप्रधनामोदो गोदो नाम महायुधः॥ ५१॥
व्याघ्रान्वयस्तथा भीमो भीमो भीम इवापरः। दलितद्वेषिदोःस्तम्भदम्भः संभश्च काण्टिकः॥
शृङ्गारः संगराङ्गानामिङ्गालकुलसंभवः। शिवश्चोत्तालकुन्ताग्रः करालः कालसंनिभः॥५३॥
परवीरश्रियां चोरश्चोरवंश्यो गणाग्रणीः। भीकोऽतिभीषणानीकोऽत्यभीको रणकर्मणि॥
वैरिवित्रासजननो युधि भैरवभैरवः। स भाभिर्भासमानोऽस्य सनाभिरपि भैरवः॥ ५५॥
अमी शैलपतेः शूराः सूरा इव सतेजसः। स्वया स्वया श्रिया रम्याः प्रणम्यामुं प्रतस्थिरे॥
आध्यक्षे शिव एतेषां न्ययोजयत कावुकम्। सर्वेषां वृष्णिवीराणां वासुदेव इवाऽऽहुकम्॥
संनाहैः स्वैः समाकीर्णास्तेऽवतीर्णाः पुरंदरात्। अम्बुदा इव गर्जन्तः संनद्धतरसैन्धवाः॥
तामतीत्य निशां तत्र प्रतीपविजिगीषया। प्रयाणाभिमुखीभूय कारयामासुरानकान्॥५९॥
अथ पाद्भिः पदातीनां भिन्दन्त इव भूतलम्। कर्तयन्त इवाश्वीयवर्तकैर्व्योममण्डलम्॥
प्रकिरन्त इवारीणामुपरि प्रलयानलम्। शूरास्ते ददृशुः सद्यो विकुर्वाणाः शिरोबलम्॥६१॥
परस्तु बलवद्वीक्ष्य शिवसैन्यमुपागतम्। निजगाद निजानीकपत्तीनतिमतीनिदम्॥६२॥

बल्लाल उवाच—

मा भैष्ट स्मयबंहिष्ठमवलोक्य द्विषद्बलम्। प्रधने निधनं श्रेष्ठमश्रेष्ठं हि पलायनम्॥ ६३॥
फत्तेखानमतेनैते वयं प्राप्ताः शिरोबलम्। अवस्थानमिहास्माकं ध्रुवस्थानमिव ध्रुवम्॥६४॥
यदि वो भयमेतर्हि तर्हि सद्यो ममाऽऽज्ञया। द्वितीयमिव मामत्र वप्रमालम्ब्य तिष्ठत॥ ६५॥
न ह्यस्मन्निधनेनैव स्वामिकार्यं प्रसिध्यति। अतो युद्धाय महते वप्रमेवाऽऽश्रयामहे॥ ६६॥
क्षोदिष्ठमपि दिष्टेन दिष्टेऽमुष्मिन् सुदुर्गमे। दुर्गमेतद्धि सिद्धिं नो युद्धस्यास्य विधास्यति॥
साभिमानैः साभिमानं युध्यमानैः शिरोबले। इहास्माभिः शिरो देयं न तु देयं यशो रणे॥
यशसे दयितां स्वीयां दशास्यदमनो जहौ। यशसे दानवाधीशो बलिः पातालमाययौ॥६९॥
यशसे दानवारातिः कामठीं तनुमाददे। यशसे स्वयमुत्कृत्योत्कृत्य मांसं शिबिर्ददौ॥७०॥

यशसे खण्डपरशुः सद्यो हालाहलं पपौ । यशसेऽस्थीन्यहो कृत्वा दधीचिः सद्गतिं ययौ ॥
यशसे काश्यपीं सर्वामत्यजज्जमदग्निजः । यशसे शरशय्यायामशेत स्वर्णदीसुतः ॥ ७२ ॥
तदद्य यशसेऽर्थाय प्रतियोत्स्यामहे परान् । यावन्न प्रहरन्त्येते वीक्ष्य वीक्ष्य वरान् वरान् ॥
इत्युक्तवति बल्लाले योधास्तस्य सहस्रशः । सद्यस्तद्दुर्गमास्थाय विनेदुर्द्विरदा इव ॥७४॥
अथ प्रतिभटान् दृष्ट्वा कृतवप्रावलम्बनान् । कावुकः समराकाङ्क्षी स्वान् सैन्यानिदमब्रवीत् ॥

कावुक उवाच—

अहो शिवस्य विषयं संप्राप्तो विजिगीषया । बलवानेष बल्लालो वप्रमाश्रित्य तिष्ठति ॥७६॥
अस्मदीयमिदं ह्येष समाश्रित्य शिरोबलम् । अहो दर्शयते मन्दमतिरात्मशिरोबलम् ॥७७॥
न सन्त्यट्टास्तथा चास्य नह्यस्ति परिखा तथा । अतो न दुर्गमं दुर्गमदो जानीत सैनिकाः ॥
क्रियतां परिवेषोऽस्य परितोऽध्वा निरुध्यताम् । क्षणेनैकेन निखिला परिखाऽपि प्रपूर्यताम्
विहङ्गमानिवोदग्रक्रमानात्मतुरङ्गमान् । उत्पात्याऽऽदीयतामेतत्कुद्दालैर्वा विदार्यताम् ॥८०॥
उत्खन्यतामदः सद्यो मूलमस्य निखन्यताम् । किमु दुर्गमिदं लङ्का येनाऽऽतङ्काय जायताम् ॥
इत्युक्ताः कावुकेनोच्चैः सैनिकाः समरोद्धताः । सद्यस्तद्दुर्गमादातुमुपचक्रमिरेऽभितः ॥
परेऽप्यमून् पुरो वीक्ष्य सुरोद्धुरपराक्रमान् । मन्वानाः प्रधनारम्भं धन्वान्यादुधुवुस्तमाम् ॥
उपरिष्टादिमान्द्रष्टुं यश्चकारोन्नतं शिरः । स सद्यः छिन्नमूर्धत्वादभूत् केतुग्रहो यथा ॥८४॥
शाखाभ्य इव वृक्षाणां चञ्चरीकपरम्पराः । शरासनेभ्यः शूराणां निरीयुर्निशिताः शराः ॥
क्रूराः कार्मुकमाकर्णं समाकृष्य महौजसः । शूराः शिरांसि शूराणां निचकर्तुः शितैः शरैः ॥
कृतहस्तविनिर्मुक्ताः सायकाः पातुकाः क्षितिम् । विविशुस्तत्तलं चोच्चैर्ददृशुश्च फणीश्वरम् ॥
रथाङ्गैर्लाङ्गलैरक्षैर्मुसलैरप्युलूखलैः । उपलैश्च घरट्टैश्च प्रज्वलद्भिस्तथोल्मुकैः ॥ ८८ ॥
खादिराङ्गारपुञ्जैश्च तप्तैस्तैलैश्च भूरिशः । तैस्तैः शस्त्रैश्च वप्रस्थाः प्रतिवीरानवाकिरन् ॥
हन्यमानैरपि परैः शिवसैन्यैरुदायुधैः । परिमण्डलितं दुर्गमिदमभ्यधिकं बभौ ॥ ९० ॥
ततो गदाभिर्दीर्घाभिः परिघैरप्यनेकधा । तद्दुर्गं दारयामासुरुद्धताः केऽपि सैनिकाः ॥
केऽपि कुन्ताभिघातेन सुषिराणि प्रचक्रिरे । निःश्रेणीरधिरुह्यान्ये तद्भित्तीः परिरेभिरे ॥९२॥
आरूढास्तुरगान् केऽपि गरुडानिव रंहसा । तदुत्पतितुमैहन्त हन्त संप्रेक्ष्य सर्वतः ॥९३॥
कावुकस्तु गदादीनामायुधानामनेकधा । अभिघातेन महता दारयामास गोपुरम् ॥९४॥
स भिन्नगोपुरं वीरः प्राकारं प्राविशद्यदा । अभ्येत्य युयुधे तत्र येदिलानीकिनी तदा ॥९५॥
बडवाग्नीनिवाग्राह्यतमानभ्यागतानिमान् । प्रतिगृह्य प्रतिग्राह्यान् बल्लालो बलवान् बभौ ॥
दर्शनीयतमः प्रांशुः पिनद्धकवचो युवा । कुन्तधारी धन्वधरो धीरः सैनिकसंवृतः ॥ ९७ ॥
तुङ्गं तुरङ्गमारूढः स तदाऽभ्यधिकं तथा । दिदीपे किल निर्वाणवेलायां दीपको यथा ॥

अथ भीमश्च भीमश्च तुको गोदः सदस्तथा। संभश्चान्ये च सुभटाः पुरोविहितकावुकाः ॥
द्रुतमुत्पातितोदग्रतुरगास्तरलायुधाः। प्रहरन्ति स्म बल्लालप्रभृतींस्तीव्रया क्रुधा ॥१००॥
ततस्तेषां च तेषां च द्वेषान्धतमसान्तरे। आयुधान्यायुधीयानामन्योन्यं परिरेभिरे ॥
समरारम्भसंरम्भादन्योन्यमभियायिनाम्। तार्क्ष्यस्फुरत्तरतरत्तुरगास्थितिशालिनाम् ॥१०२॥
प्रत्यहन्यन्त शतशः शस्त्रैः शस्त्राणि शस्त्रिणाम्। विद्युतामिव तेजोभिर्दिवि तेजांसि विद्युताम् ॥
कुन्तपाणिः कुन्तधरं धन्वधारी धनुर्धरम्। गदी जघान गदिनं तदानीं शकलीभवन् ॥
न चर्मिणं विना चर्मी न वर्मी वर्मिणं विना। युयुधे प्रधनेऽमुष्मिन्न धन्वी धन्विनं विना ॥
उरश्छदमनिर्भिद्य द्रुतमुत्पातिताः शराः। क्षणं नभस्यभासन्त यथा वैभाकराः कराः ॥
भटान् सोरश्छदान् भित्त्वा वसुधां विविशुः शराः। ततो रुधिरधाराणामाविरासुः परम्पराः ॥
क्रुद्धहस्तवदुन्मुक्तपृषत्कोत्कृत्तमस्तकाः। क्षरद्रुधिरदिग्धाङ्गाः कबन्धास्तत्र चुक्रुधुः ॥१०८॥
ततो धरातले पेतुर्मातङ्गानां ततः कराः। शरैः शकलिताङ्गानां तुरंगाणां च कंधराः ॥
शरासनधरैः शूरैः शरच्छिन्नान्यनेकशः। परितस्तारिरेऽरीणां शिरांसि समराजिरे ॥११०॥
कंचित्प्रसभमभ्येत्य गदापाणिमुपागतम्। संग्रामसागरग्राहमभिजग्राह कश्चन ॥ १११ ॥
तत्रान्यच्छिन्नमेकं यः स्वं हस्तं नावबुद्धवान्। स एकेनैव हस्तेन हस्तीवाभिययौ परान् ॥
पञ्चविंशतिमिङ्गालः पोलः पञ्च च सप्त च। चोरश्चतुर्दश तथा नवाष्टौ षट् च घाण्टिकः ॥
निजघान क्षणात्तत्र वीरान् व्याघ्रश्च षोडश। एकोनविंशाः सुभटाः कावुकेन विषूदिताः ॥
प्रहतानेकपत्यश्वद्विपवर्ष्मसमुद्भवा। प्रावर्तत तदा तत्र रयाद्रक्ततरङ्गिणी ॥ ११५ ॥
पराभूय परे वीराः परिवव्रुर्यदा बलात्। तदा भयाद्विदुद्राव बल्लालबलमाहवात् ॥११६॥
हैबतस्याऽऽत्मजस्तत्र शत्रुभिर्विमुखीकृतम्। न चक्षमे स्थिरीकर्तुं तदलं विचलद्बलम् ॥
अथाद्धा स किल स्पर्धामादायोद्यमितायुधः। रयादभीयाय परान् रुषा वृत्र इवामरान् ॥
यावन्तः किल तस्याऽऽसन्निषुधिद्वितयीशराः। तावन्तः पातितास्तेन कावुकीयाः पुरःसराः ॥
स यावत्प्रासमादाय त्रासयत्यभितः परान्। तावत्कुन्ताभिघातेन कावुकस्तमपातयत् ॥
युध्यमानेऽभिमानेन सिंहेनेवोन्मदे गजे। शिवसेनाधिपतिना पातिते हैबतात्मजे ॥१२१॥
रक्तमेदोवसामांसमसृणे क्षोणिमण्डले। कोऽपि धर्तुमहो धैर्यं प्रभुरासीन्न तद्बले ॥१२२॥
तत्र दन्ताग्रविन्यस्ततृणास्त्राणार्थिनो जनाः। शतशः स्वैरमगमन् विमुक्तास्तेन मानिना ॥
केऽपि युद्धाभिमानेन युध्यमानाः ममन्यवः। सायकैः शकलीभूताः शतक्रतुपदं ययुः ॥
केचन च्छिन्नचरणाः केचन च्छिन्नपाणवः। केचन च्छिन्नवर्माणः केचन च्छिन्नवक्षसः ॥
छिन्नत्रिकास्तथा केचित्केचिच्छिन्नकफोणयः। रणन्तः करुणं मम्लुर्विलुण्ठन्तो महीतले ॥
अथ विद्विषतस्तस्य शयानस्य रणाङ्गणे। कुंजरांस्तुरगांस्तुङ्गांस्तत्तदाभरणानि च ॥१२७॥

चित्राण्यपि च वस्त्राणि तनुत्राण्यायुधानि च । याप्ययानानि कोषांश्च संभारानपरानपि ॥
संप्रहृष्टाः समादाय सुभटाः कावुकादयः । पुरंदरप्रभुं द्रष्टुं पुरंदरगिरिं ययुः ॥ १२९ ॥

अपहतरिपुवीरानेकपाश्वप्रवेकप्रचुरकनकमुक्ताहाररत्नोपहाराः ।
अवनमितशिरस्काः सैनिकाः कावुकाद्याः सरभसकृतकार्याः शाहसूनुं प्रणेमुः ॥ १३० ॥

इत्यनुपुराणे सूर्यवंशे निबासकरकवीन्द्रपरमानन्दविरचितायामध्यायश-
तसंमितायां वैयासक्यां संहितायां हैबतपुत्रवधो
नाम त्रयोदशोऽध्यायः ॥ १३ ॥

## चतुर्दशोऽध्यायः ।

कवीन्द्र उवाच—

प्रधने पातितं श्रुत्वा बलिनं हैबतात्मजम् । चुकोप शिवराजाय फत्तेखानः स्मयं वहन् ॥
ततो मुसेखानमुखैर्यवनैः सबलैर्वृतः । मत्तजित्प्रमुखैर्भूपैरनेकैश्चाभिरक्षितः ॥ २ ॥
मतङ्गजैरिवोन्मत्तैः सामन्तैश्च समन्ततः । युतः सोऽभिययौ तूर्णं शिवराजजिगीषया ॥३॥
प्रचलन्मत्तमातङ्गचक्रनक्रसमाकुलम् । प्रोत्पतत्तरलोत्तुङ्गतुरङ्गतिमिमण्डलम् ॥ ४ ॥
मारुतान्दोलितानेकपताकोर्मिविराजितम् । धरातलोद्धूतरजोभरधाराधरोद्धुरम् ॥ ५ ॥
स्फुरद्दुन्दुभिनिर्घोषं घोषोद्घोषितदिक्तटम् । सितातपत्रडिण्डीरपिण्डमण्डलपाण्डुरम् ॥६॥
कठोरचर्मकमठं चण्डकोदण्डपन्नगम् । विस्फुरद्धेतिवडवानलप्रतिभयप्रदम् ॥ ७ ॥
समरार्थी समादाय तरसा सैन्यसागरम् । स येदिलचमूपालः पश्यति स्म पुरंदरम् ॥ ८ ॥
साभिमानः फतेखानः प्रचलन्तीं प्रभाविणीम् । अविदूरे गिरेस्तस्य न्यवेशयत वाहिनीम्
शाहसूनुस्तदालोक्य द्विषत्सैन्यमुपागतम् । न्यध्वानयद् गिरेस्तस्य शिखरे संगरानकम् ॥
तेनाऽऽनकनिनादेन परसैनिकमानसम् । चकम्पे पवनेनेव सरः सपदि मानसम् ॥ ११ ॥
अथ मानी फतेखानः समानगुणशालिभिः । मुसेखानप्रभृतिभिर्महाहंकारकारिभिः ॥१२॥
कल्पानलसमप्राणकृपाणवरधारिभिः । प्रवृद्धाभ्याहवोत्साहैः ससंनाहैः प्रभाविभिः ॥१३॥
धीरैः परिवृतो वीरैः क्ष्वेडारवविधायिभिः । सद्यः पुरंदरं शैलमारोढुमुपचक्रमे ॥ १४ ॥
विदारिताभ्रगर्भाणि क्ष्वेडितानि वितन्वतः । तस्यानीकस्य महतो धरं तमधिरोहतः॥१५॥
अभूत्पृष्ठे फतेखानो मुसेखानो मुखेऽभवत् । फलस्थानपतिः सव्ये पार्श्वेऽन्यत्र च घाण्टिकः॥
ददुर्नैव पदं भूमौ येऽन्वहं यानयायिनः । ते तमारुरुहुः शैलं तदा बत निजैः पदैः ॥

अचलारोहणपरांस्ततो दृष्ट्वाऽभितः परान् । शिवसेनाधिपतयः क्रुद्धाः सिंहा इवानदन् ॥
प्रज्वलद्भिरयःपिण्डैर्नालायन्त्रास्यनिःसृतैः । नलिकागुलिकाभिश्च गण्डशैलैरनेकशः ॥१९॥
उल्काबाणैश्च शतशो भिन्दिपालैश्च भूरिशः । परानवाकिरन् भूरि शिवशूराः सहस्रशः ॥
शिलोच्चयपरिभ्रष्टानुपलानुरुविग्रहान् । यांस्तले पातयामासुः शिवसैन्याः किलोद्धुरान् ॥
दूरादापततां तेषां संघट्टादध्वसंस्थिताः । धाराधराखधराः समुद्धूतरजोभवाः ॥ २२ ॥
पृथुलास्तत्क्षणोन्मीलत्प्रचुराग्निकणाकुलाः । [इवाऽऽघातात्पृथग्भूता उल्कापाताः सहस्रशः ॥]
उपलाः शकलीभूताः प्रभूताः परितोऽम्बरम् । प्रोत्पत्य प्राहरन्नुच्चैस्तदुपेतं द्विषद्बलम् ॥
इरंमदप्रतिभयैर्ज्वालजालमयैस्तदा । अग्नियन्त्रोद्धतैरश्मसारपिण्डैरनेकशः ॥ २५ ॥
खण्डशः खण्डशो भूतास्ते येदिलचमूभटाः । खगा इव खमुत्पत्य श्येनश्रेणिमतर्पयन् ॥
उल्काबाणाः क्षणे तस्मिन्नुपाहितसलक्षणाः । प्रोद्भवद्दारुणारावमापतन्तो नभोऽङ्गणात् ॥
गरलज्वलनज्वालाननाः किमनिलाशनाः । भ्रान्त्वा भ्रान्त्वा परिभ्रान्तां विदधुर्यावनीं चमूम्॥
एकाऽपि गुलिका तत्र नलिकायन्त्रनिर्गता । भित्वाऽभ्यपातयद् भूमौ जवना यवनान् बहून्
गिरिस्थपरिमुक्ताभिः शिलाभिः शीर्णवक्षसः । केचित्प्रपद्य वैचित्यमध्वनोऽर्द्धेऽवतस्थिरे ॥
गिरेस्तस्य तटे लग्नाः केऽपि भग्ना महाश्मभिः । वमन्तो लोहितं भूरि रक्तवालुकलोहितम् ॥
समुद्यानुप्लवैरुह्यमानाः प्राणावनार्थिनः । परावृत्य रयादात्मशिबिराय प्रतस्थिरे ॥ ३२ ॥
गुलिकायन्त्रनिर्यातगुलिकाभिन्नविग्रहाः । जलयन्त्रजलाकारकीलालोत्कलिकाकुलाः ॥३३॥
संजातसंज्वरावेशभरास्तनुतरस्वराः । केचित्पिपासिता एव कृतान्तातिथितां ययुः॥ ३४ ॥
पताकिनीं तामालोक्य द्विषत्कृतपराभवाम् । मुसेखानः सजातीयान्सुभटानभ्यभाषत॥३५॥

मुसेखान उवाच—

अमी महाश्मनां पाताः किमुत्पाताः पदे पदे । समन्तादापतन्तोऽमून् पातयन्ति चमूपतीन् ॥
अहो महोदयोऽमुष्य पुरंदरपतेरयम् । यदस्मानपि विक्रान्तान् विक्रम्याऽऽक्रामति स्वयम्॥
निस्त्रिंशप्रभवं लोके येषां नः प्रथितं यशः । अपयानमितस्तेषां नितान्तमयशस्करम्॥३८॥
मैव दद्ध्वं पदं पश्चात्पुरः पश्यत भूधरम् । न जहाति जयः प्रायः संपरायस्थितं नरम् ॥
इति ब्रुवाण एवायं समं तैरनिवर्तिभिः । पुरंदराचलतटीमारुरोह महामनाः ॥ ४० ॥
अथाशरफशाहेन सैनिकैः स्वैश्च भूरिशः । उभाभ्यामपि शेखाभ्यां राज्ञा मन्त्रजिता तथा ॥
प्रबलेन फलस्थाननायकेन च रंहसा । फत्तेखानस्य चानीकैः सामन्तैरप्यनेकशः ॥४२॥
सनिर्घोषैर्महामेघैर्महामेघ इवाभितः । तमारोहन्तमालोक्य पुरंदरतटीं रुषा ॥ ४३ ॥
सद्यः शिवतमादिष्टाः क्षेपिष्ठाः सर्वतो दिशम् । गोदप्रभृतयो योधाः प्रत्यगृह्णन्नुदायुधाः ॥
मुसेखानप्रभृतयोऽप्यमून् परचमूभटान् । अभीयुरभियोऽभ्येत्य ग्रहा इव महाग्रहान् ॥४५॥

तदाऽशरफशाहेन सद्दो भुजमदोद्धतः । मुसेखानेन सरुषा जगत्स्थापकवंशजः ॥ ४६ ॥
मिनादरतनाभ्यां तु युयुधे भैरवाभिधः । घाण्टिकेन च वीरेण व्याघ्रः शीघ्रतरायुधः ॥४७॥
महामानी गदापाणिः प्रबलानीकिनीयुतः । सैन्यैरन्यैश्च बहुभिर्बह्वयुध्यत कावुकः ॥४८॥
अभ्याहवस्मयभृतो युगव्यायतबाहवः । वरशीर्षण्यशीर्षाणो वर्मसंवृतविग्रहाः ॥ ४९ ॥
ते तेऽनीकद्वयीयोधाः सविरोधाः परस्परम् । शरासनं विधुन्वानाः संदधानाः शितं शरम् ॥
भूयो भूयः सहस्वेति भाषमाणाः स्मयोद्धुरम् । तटे पुरंदरगिरेस्तदा युयुधिरेऽद्भुतम् ॥५१॥
तदा पुरंदरार्थाय प्रहरन्तः परस्परम् । नैकेऽवरोढुमारोढुं बत नैके तदाऽशकन् ॥ ५२ ॥
अवलोक्य बतान्योन्यमानीय च शरव्यताम् । एके भुवस्तलं बाणैः प्यधुरन्ये दिवस्तलम् ॥
यः कस्यचिदुरो भित्त्वा भुजं चिच्छेद कस्यचित् । स एवेषुः सशीर्षण्यमन्यदीयं शिरो हरत् ॥
तत्र प्रसभमभ्येत्य गोदः क्रोधरयोद्धतः । निचखान क्षणुतं भल्लं मुसेखानभुजान्तरे ॥५५॥
निशातं विद्विषा तेन निखातं निजवक्षसि । यवनः स तु तं भल्लं भीमं संनाहभेदिनम् ॥
उभाभ्यामपि पाणिभ्यामुद्धृत्य स्वभुजान्तरात् । रोषदष्टाधरतलः सद्य एव द्विधा व्यधात् ॥
अलंचकार तं तत्र रुधिरार्द्रमुरःस्थलम् । यथा शिलोच्चयं सान्द्रगैरिकाख्यशिलातलम् ॥५८॥
इहान्तरे खड्गचर्मधारी धीरः सदः स्यदात् । योद्धाऽशरफशाहेन योद्धुमद्धाऽभ्यपद्यत ॥
उभावपि युधा मत्तौ रक्तनेत्रावुभावपि । उभावपि ससंनाहौ महोत्साहावुभावपि ॥ ६० ॥
स्वया स्वयाऽसिलतया परिनर्तितया भृशम् । दिवं सौदामिनीद्योतैर्दीपयन्तावुभावपि ॥६१॥
परस्परान्तरप्रेक्षापरौ पञ्चाननस्वरौ । भ्रान्तोद्भ्रान्तादिकान् भेदान् दर्शयन्तौ विरेजतुः ॥६२॥
अथासिपातैरन्योन्यविहितैः क्षतविग्रहौ । एकेनैव क्षणेनैतौ रुधिरार्द्रौ बभूवतुः ॥ ६३ ॥
व्याघ्रस्तु पुरुषव्याघ्रं घाण्टिकं घोरशक्तिकम् । प्रजहार भुजस्तम्भे शक्त्या निशितया द्रुतम् ॥
ततः स्रवदसृग्दिग्धदेहो युद्धविशारदः । शक्त्यैव घाण्टिकोऽत्युच्चैः प्रवेष्ट तमताडयत् ॥६५॥
तदाऽमुना हन्यमानो व्याघ्रो व्याघ्र इवापरः । स्वशौर्यं दर्शयामास हर्षयामास च स्वकान् ॥
आकर्णाकृष्टधन्वानौ मिनादरतनावपि । अभ्येतं भैरवं चोरं छादयामासतुः शरैः ॥६७॥
ताभ्यामुभाभ्यामुन्मुक्तैः शरैर्नीतं शरव्यताम् । अवाप्तचालनीभावं तदभ्राजत तद्वपुः ॥६८॥
स एको द्वाविमौ तत्र युद्धमप्यभवच्चिरम् । तथाऽपि भैरवश्चोरः प्रतिपेदे जयश्रियम् ॥६९॥
कावुकेनापि सरुषा पावकप्रतिमौजसा । गदाघातेन महता शायिताः शतशो द्विषः ॥७०॥
विशीर्णवरवर्माणो विदीर्णतरवक्षसः । सहसा परिमुञ्चन्तो हस्तविस्रस्तहेतयः ॥ ७१ ॥
प्रतिप्रतीकनिर्गच्छद्रक्तरञ्जितभूमयः । आयोधनाजिरेऽमुष्मिन्निपतन्तो विरेजिरे ॥ ७२ ॥
विगलद्रक्तरक्ताङ्गाः सुभटास्ते बभुस्तदा । निर्झरोद्गारसंपृक्तगैरिकार्द्रा इवाद्रयः ॥ ७३ ॥
तत्र तेषां परेषां च तदभ्याहवकौतुकम् । व्यलोकत शिवोऽप्यद्धा वीरो वीरश्रियोल्लसन् ॥

तदा पुरंदरतटादतिमात्रस्मयोद्धता । प्रणदन्ती प्रववृते लोहितोदा महानदी ॥ ७५ ॥
आरुह्य व्योमयानानि द्योतयन्तो दिवोऽन्तरम् । दर्शं दर्शं सुराः सर्वे प्रशशंसुर्महाहवम् ॥७६॥
तत्कालकलितोद्दामभुण्डमालामनोहरः । प्राननर्त मुदा तत्र प्रमथैः सहितो हरः ॥ ७७ ॥
अतिमात्रं जिघत्सन्तस्तत्क्षणाधिगतक्षणाः । अतृप्यन् प्रचुरं प्राप्य पिशितं पिशिताशनाः ॥
प्रेतरङ्कोऽङ्कमारोप्य करङ्कमकुतोभयः । संपृक्तशोणितरसं तरसं बुभुजे तदा ॥ ७९ ॥
उद्दामोड्डानशौण्डाभिर्डाकिनीभिः समं तदा । वपूंषि पुपुषुः स्वानि शाकिन्यः सैनिकामिषैः॥
कवींन्द्र उवाच—
यथा तत्र मुसेखानो गोदेन निहतस्तदा । निशम्यतां तथा सर्वमभिधास्याम्यथ द्विजाः ॥
मुसेखानेन बलिना भम्रभल्लः स कोपनः । कालकाकोदराकारकरवालकरोऽभवत् ॥८२॥
तत्र तत्करवालेन तडिदाकारधारिणा । पेतुः पठाणाः शतशः शकलीभूय भूतले ॥ ८३ ॥
मुसेखानस्तु तद्दृष्ट्वा तस्य कर्मातिमानुषम् । तमात्मकरवालेन भुजे सव्ये व्यताडयत् ॥८४॥
ताडितः स भुजे सव्ये मुसेखानेन वेगिना । नावेपत महावीरो वातेनेव वनद्रुमः॥ ८५ ॥
निवद्धभ्रूपुटौ भूरिरोषरूक्षेक्षणावुभौ । गतप्रत्यागतकरौ घोरखङ्गलताकरौ ॥ ८६ ॥
द्विरदाविव नर्दन्तौ प्रहरन्तौ परस्परम् । विशीर्यमाणशीर्षण्यतनुत्रौ तौ विरेजतुः ॥८७॥
अथान्योन्यायुधाघातदीर्यमाणावुभाविमौ । समं रुधिरधाराभिर्वसुधामभ्यषिञ्चताम् ॥ ८८ ॥
क्षणमात्रमहो तत्र युद्धमासीत्तयोः समम् । ततस्तत्कृततोदोऽपि ततो गोदोऽधिकोऽभवत् ॥
अथ प्रहारैर्बहुभिर्निर्भरं विह्वलोऽपि सन् । बली स पातयामास खड्गं गोदस्य मूर्धनि ॥
यावदापतति ह्यस्य करवालः स्वमूर्धनि । तावद्गोदोऽसिना स्वेन तमरातिमताडयत् ॥९१॥
ताडितः स तदा तत्र गोदेन क्रोधमूर्तिना । आस्कन्धभागमामध्यभागं भिन्नो द्विधाऽभवत् ॥
निपातितं तदा तस्य द्विधाभूतं कलेवरम् । अभूच्च रुधिरोद्गारैररुणं धरणीतलम् ॥ ९३ ॥
जगत्स्थापकवंश्येन मुसेखाने निपातिते । शतशस्तत्र यवनाः शमनातिथयोऽभवन् ॥९४॥
सदेन खड्गिना खड्गयुद्धं योद्धुमपारयन् । परः शरासनं गर्वादर्वाग्भूयाग्र्यमग्रहीत् ॥
ततोऽशरफशाहस्य तुदतस्ते जितैः शरैः । विकृष्यमाणमौर्वीकं व्योमान्तवलयायितम् ।
अनेकवर्णविन्यासमिन्द्रायुधमिवाऽऽयतम् । धनुरभ्येत्य चिच्छेद करवालकरः सदः ॥
स तेन शीघ्रहस्तेन द्विषता द्विदलीकृतम् । विचित्रवर्णदुर्वर्णबिन्दुराजिविराजितम् ॥ ९८॥
तदा तदाहवसखं विहाय विशिखासनम् । सद्यस्तमहितं हन्तुं घोरं परिघमाददे ॥ ९९ ॥
पञ्चाननसमस्तन्वा तन्वानोऽतितमां युधम् । गृहीतमात्रं चिच्छेद सदस्तस्य तदायुधम् ॥
आदत्त तत्र हस्ते स्वे स म्लेच्छो यद्यदायुधम् । सदो वीररसावेशात् तरसा तत्तदच्छिनत् ॥
ततो निरायुधो भूत्वा कृत्वाऽनभिमुखं मुखम् । यवनः स परावृत्तिपथं लेभे यथासुखम् ॥

अथ प्रतिभटात्तस्माद् घाण्टिकोऽपि द्रुतं तथा । अपद्रुतश्चिरं युद्ध्वा द्विरदाद् द्विरदो यथा ॥
भैरवं भैरवं मत्वा मिनादरतनावपि । संवर्तसमयप्रायात्संपरायादपेयतुः ॥ १०४ ॥
पुरंदरात्परावर्तमानां त्राणार्थिनीं चमूम् । नालोकत फतेखानो ग्लानोऽनभिमुखीभवन् ॥
अभिमुखमुपायातं तत्र प्रभूतबलं बलाद्युधि किल फतेखानं भङ्क्त्वा स शाहनृपात्मजः ॥
अविहतगतिर्दैवोद्रेकादुदित्वरविक्रमो विजयपुरभूशक्रं जेतुं बताभिमुखोऽभवत् ॥ १०६ ॥
भृशं युद्ध्वाऽवाप्तः शिवधरणिपालादभिभवं फतेखानो म्लानो विजयपुरमभ्यर्णमकरोत् ।
तमाकर्ण्योदन्तं सदसि महमूदेन सहसा ममज्जे चिन्ताब्धौ सुचिरमनुतप्तेन मनसा ॥१०७॥

इत्यनुपुराणे सूर्यवंशे निवासकरकवीन्द्रपरमानन्दविरचितायामध्याय-
शतसंमितायां वैयासक्यां संहितायां मुसेखानवधो नाम
चतुर्दशोऽध्यायः ॥ १४ ॥

---

## पञ्चदशोऽध्यायः ।

कवीन्द्र उवाच—

परैः पुरंदरतटे मुसेखानं निपातितम् । प्रभूतं सैन्यमन्यच्च पराक्रम्य पराहतम् ॥ १ ॥
फत्तेखानं च विमुखीकृतमन्तिकमागतम् । निशम्य महमूदेन मुमुदे न दिवानिशम् ॥२॥
अथो विदूयमानोऽन्तः फत्तेखानस्य भङ्गतः । स्वे चेतसि चिरस्येत्थं महमूदो व्यचिन्तयत् ॥
अहो अहर्दिवममी अस्माभिः परिपालिताः । क्षिण्वन्ति यवनानस्मान् क्षत्रियाः कालनोदिताः
समृद्धिमाधिकां लब्ध्वा दुर्मदात्मा मदाश्रयात् । साहसी शाहराजोऽयं मन्नियोगं न मन्यते ॥
अनेन कोपनेनाद्धा विधायोद्धतमाहवम् । पुण्डरीकपुरोपान्ते विजितो रणदूलहः ॥ ६ ॥
अनेन मन्त्रकलया कलितो मलिकोऽम्बरः । निरर्गलेन निकृतः स चानेनार्गलेश्वरः ॥७॥
चिररात्राय पित्रेव येनायं परिपालितः । स निजामोऽप्यनेनोच्चैर्निकृतिस्थेन वञ्चितः॥८॥
कार्णाटकाः क्षोणिभृतः परिहाय मदीयताम् । वैतन्मन्त्रयोगेन प्रथयन्त्येतदीयताम् ॥९॥
मुहुराहूयमानोऽपि नाऽऽयातोऽयमुपह्वरे । अपातयदयं ह्यस्मज्जयं संशयगह्वरे ॥ १० ॥
अनेनोपकृतः पूर्वमिभरामः पदे पदे । निवेशितोऽयं संतुष्य तेनाप्यत्युन्नते पदे ॥ ११ ॥
अनेन हेतुना ह्यस्य मन्तवः शतशो मया । अतिक्रान्ताध्वनोऽत्यर्थं क्षान्ता एव दिने दिने ॥
आगांसि सुगरीयांसि क्षन्तुं नैव क्षमोऽभवम् । तदानीं निग्रहायास्य मुस्तुफाखानमादिशम् ॥
अस्मिंस्तु निगृहीतेऽस्य सुतौ शंभुशिवावुभौ । उन्नद्धीभूय युध्येते मन्निमज्जनलोलुभौ ॥
पित्रर्थे शंभुना तत्र फरादः परिभावितः । संपराये शिवेनात्र फत्तेखानोऽपि यापितः ॥

अलं बलमहो शंभोः किल येन यशस्विना। फरादस्तत्र भग्नो न भग्नं किंत्वद्य मन्मनः॥
शिवस्य यस्य हस्तेऽद्य धरौ सिंहपुरंदरौ । सोऽहंकारं कथंकारं न करिष्यति मय्यरौ ॥
रणो यत्राजनिष्टायं भीषणो भीष्मपर्वतः । सुतरां दुर्ग्रहोऽस्माभिः स पुरंदरपर्वतः ॥१८॥
बिङ्गरूरे पुरे शंभुं शिवं चाद्रौ पुरंदरे । न्यवेशयत शाहोऽयं किमस्मत्पारिभूयते ॥ १९ ॥
जनकः शंभुशिवयोर्न मोक्तव्यो मया यदा। समृद्ध्यै श्रियेऽमुष्यै बत देयोऽञ्जलिस्तदा॥
पृदाकुरिव निर्मुक्तो मोक्तव्योऽयं मया यदि । अपकारपरस्तर्हि किं मां नापकरिष्यति ॥
अयं मोक्तव्य इत्येको मोक्तव्यो नेति चापरः । मन्त्रयोरुभयोर्मन्ये प्रथमो मद्धितावहः ॥
सर्वथा जिह्मगस्यास्य रोषो मन्मन्त्रवैभवात्। अपकारपरस्यापि प्रयास्यत्यवकेशिताम्॥ २३॥
इमामुपकृतिं कृत्वा निधास्याम्यस्य मूर्धनि। न विस्मरिष्यति ह्येनां कुलीनोऽयं गुणाग्रणीः॥
चिरं विचिन्त्य मनसा सुधीर्धीसचिवानिदम्। न्यगदद्येदिलो युक्तमित्यमन्यन्त तेऽप्यरम्॥
अथ तं मङ्गलस्नानं निर्मलाम्बरभूषणम्। परिवेषविनिर्मुक्तं नवीनमिव पूषणम् ॥ २६ ॥
उपह्वरे समानाय्य मानार्हमुपवेश्य च । अनुनीय च सोल्लासं महमूदोऽभ्यभाषत ॥२७॥

महमूद उवाच—

मत्तो ह्यजानतो जातं तद्धि नो विद्धि जानतः। न जगत्यत्र दुर्ज्ञेयं राजंस्तव विजानतः॥
विहितो मुस्तुफेनोच्चैर्द्वेषादफजलेन वा । तं मन्तुतन्तु राजेन्द्र मदीयं मन्तुमर्हसि॥२९॥
दिदृक्षुस्त्वामहं यस्मै यत्नानकरवं बहून् । बत मे संमदः सोऽभूदस्तु वा माऽस्तु वा तव॥
उक्तोऽसि मृदुभिर्वाक्यैः परिमुक्तोऽसि निग्रहात् । अभिजातोऽसि भूपाल मदभीष्टपरो भव
एकामप्युपकारस्य कणिकां प्राप्य निर्वृताः । शतमप्यपकाराणां न स्मरन्ति महाव्रताः॥
अणुनाऽप्यपकारेण परिक्षुभितमानसाः । उपकारसहस्राणि न स्मरन्त्यपचेतसः ॥ ३३ ॥
अपकारसहस्राणि करोत्वलमसज्जनः । उपकारसहस्राणि करोत्येव तु सज्जनः ॥ ३४ ॥
उपकारं परकृतं स्मरन्ति स्वकृतं न ये । त एव धारणावन्तः कृतज्ञाश्च सतां नये ॥३५॥
उपकारपरं लोकं प्रभुर्नोपकरोति यः । स्वप्नलब्धा इव मुधा समृद्धा अपि तच्छ्रियः॥
शिक्षयस्व कनीयांसं तनयं गर्वपर्वतम् । महाराज मदीयं मे देहि तं सिंहपर्वतम् ॥ ३७ ॥
न हि मां मुञ्चतितमां सिंहशैलग्रहाग्रहः । मदीयेन नियोगेन शिवायास्तु पुरंदरः ॥ ३८ ॥
करोतु मह्यं सोऽप्यद्धा बिङ्गरूरमुपायनम्। यद्ग्रहेन फरादेन व्यधीयत पलायनम् ॥ ३९ ॥
नियुञ्जते नियोगार्हान् कार्यायाऽऽर्याः क्षणे क्षणे। तन्न कुर्वन्ति ते तर्हि को हेतुः शीलरक्षणे॥
प्रभुर्नियुक्ते कार्यार्थी कार्यार्थी तं निषेवते। तयोरन्यतराकार्यान्न कार्यमुभयोरपि ॥४१॥
न सौहित्यं विना पानं विना प्राणं न विग्रहः । विराजते महाराज नानुयानं विनाऽनुगः॥
किं स्यादुक्तेन बहुना तवाहं त्वं ममाधुना। अन्योन्यमवलम्बो नौ लोकस्यास्यावलम्बनम्॥

अल्पवर्णमयीमित्थमनल्पार्थगरीयसीम् । येदिलः शाहराजाय श्रावयामास भारतीम् ॥ ४४ ॥
यत्र यद्व्यञ्जयामास महमूदो वदावदः । शाहः स्वेन स्मितार्धेन तत्र तस्योत्तरं ददौ ॥
स तदानीं महाबुद्धिर्महमूदं मदोद्धतम् । तद्दुर्गद्वितयीदानसंप्रदानममन्यत ॥ ४६ ॥
अथ तस्य विमुक्तस्य सत्कृतस्य यथायथम् । येदिलः सदनद्वारि द्विरदाश्वमबन्धयत् ॥
स तदा जगदाह्लादतत्परः परसंकटात् । मुमुचेऽम्भोधरघटापटलादिव चन्द्रमाः ॥ ४८ ॥
बन्धुः सर्वस्य लोकस्य मुक्तस्तस्मात्स निग्रहात् । व्यराजततरां तत्र दिवाकर इव ग्रहात् ॥
मुक्तमात्रः स युक्तोऽभूदनीकेन महीयसा । दिदीपे जगती सर्वा तदीयेन सुतेजसा ॥
अथ शंभुर्महाबाहुरनतिक्रमणीयया । बिङ्गरूरं पुरं सद्यस्तत्याज पितुराज्ञया ॥ ५१ ॥
मर्थोऽप्याहवं कर्तुमदेयमपि सर्वथा । शिवः सिंहाचलं प्रादात् पित्रर्थाय गरीयसे ॥ ५२ ॥
थ निज इति मत्वा पूजयित्वा वचोभिः पदि पदि विहिताभिः प्रीणयित्वोपदाभिः ।
पचितबहुसेनः प्रेषितो येदिलेन प्रतिभटविजयार्थं शाहराजः प्रतस्थे ॥ ५३ ॥

इत्यनुपुराणे सूर्यवंशे निवासकरकवीन्द्रपरमानन्दविरचितायाम-
ध्यायशतसंमितायां वैयासक्यां संहितायां दुर्गद्वयप्रदानं
नाम पञ्चदशोऽध्यायः ॥ १५ ॥

## षोडशोऽध्यायः ।

कवीन्द्र उवाच—

यथाभिमतलाभेन महमूदेऽतिनिर्वृते । स्वयं तु पितुरर्थाय वितीर्णे सिंहपर्वते ॥ १ ॥
आहूय स्वर्णशर्माणमग्रजन्मानमन्तिके । शिवोऽद्धा मन्त्रवित्तत्तन्मन्त्रवेदिनमब्रवीत् ॥ २ ॥

शिव उवाच—

जानतामतिमूर्धन्यं यं धन्यं जानते जनाः । स मां नूनं न जानीते महाराजो महामनाः ॥
अजानानो न जानातु सुखेनैव सतो गुणान् । जानानो यन्न जानीते तद्दुनोति हि सन्मनः
सोऽज्ञास्यद्यर्हि मां तर्हि नादास्यत्सिंहपर्वतम् । कोऽन्यथा तरसा जेष्यत्तमिमं मत्करास्थितम् ॥
अप्रमत्तोऽपि यो मत्तो द्विषते सिंहपर्वतम् । आदापयद्येदिलाय किं वक्ष्ये तं महाव्रतम् ॥
स्वयं नियन्ता विश्वस्य विश्वस्य बत वैरिषु । सुखं सुप्तो निजगृहे ततो निजगृहे रिभिः ॥
नावज्ञेयाः खलु ज्ञेन वराका अपि विद्विषः । प्रशाम्यते पतंगेन प्रज्वलन्नपि दीपकः ॥
दीपं विनाशयन्नेव पतंगश्चेद्विनश्यति । तुल्यतां कस्तयोस्तर्हि जात्यन्ध इव पश्यति ॥
नूनं पिपीलकोऽप्येकः प्रविश्य करिणः करम् । भवत्यन्तकरस्तस्मादल्पं मन्येत नो परम् ॥
अहो महाबाहुरसौ जानानोऽपि महानयम् । गणयत्येव न परानस्य दोषो महानयम् ॥

अरातिनिगृहीतेन शाहेन गुरुणा मम । यः प्राप्तश्चिररात्राय कारागारपरिश्रमः ॥ १२ ॥
तस्य निर्यातनं कर्तुं संप्रवृत्तोऽस्मि सर्वथा । यवनान्तात्प्रवृत्ताऽद्यप्रभृत्यत्रास्तु मत्प्रथा ॥
यः परस्माद्बिभेत्युच्चैः परस्तस्माद्बिभेति च । न बिभेति परस्माद्यः परस्तस्माद्बिभेति हि ॥
नूनं मया निहन्तव्यास्ते ते यवननायकाः । शरधिद्वितयस्यैते तेजिताः सन्ति सायकाः ॥
विजयाह्वपुरग्राहोत्सुकं संप्रति मन्मनः । अतोऽद्य नोद्यसे सद्यो नियुज्यन्तां तुरंगिणः ॥

सुवर्णशर्मोवाच—

दुरन्तं बलवद्वैरं दुरन्तः पापसंचयः । दुरन्ताऽभ्यर्हितागर्हा दुरन्ता गुरुगर्हणा ॥ १७ ॥
विधाय बलवद्वैरं तव तातः कृताग्रहः । नाभूदवहितो यर्हि तदर्हस्तर्हि निग्रहः ॥१८॥
स प्रभावी महाराजो मन्त्रिणस्तस्य सुव्रताः । तेन यद्बलवद्वैरं कृतं सोऽपनयः कृतः ॥
तनुते यद्यलं वैरमबलीयान् बलीयसा । तर्हि तस्य परीभावे सर्वथा प्रभुरेव सः ॥ २० ॥
दानमभ्यधिके शत्रौ समे साम विधीयते । ऊने दण्डविधिः प्रोक्तो भेदः साधारणः स्मृतः
दिने दिने भवन्नूनः समः साम्यं विमुञ्चति । आधिक्यं चाधिको येन को भेदं न प्रशंसति ॥
नरेन्द्र नूनमूनोऽपि द्वेषणो भेदमर्हति । ऊनस्याप्यूनताऽत्यर्थं हितायैव भवेद्युधि ॥२३॥
ऊनोऽपि यदि दूनोऽयमिति मत्वाऽनुनीयते । तर्ह्यन्तः श्लाघमानोऽसौ स्वमेव बहु मन्यते
ऊनानामप्यनूनत्वममनूनानां तथोनता । दृश्यते मनुजाधीश समयान्तरवैभवात् ॥ २५ ॥
तस्मादूने नरेन्द्रेण द्विषि दण्डो विधीयते । मते पत्युरपां येन मनः सम्यङ् निधीयते ॥
समर्थश्चासमर्थश्चेत्युपायो द्विविधो मतः । द्वितीयो ह्यवकेशी स्यात्प्रथमस्तु फलेग्रहिः ॥
योषितः सारहारिण्यो मदिरा मोहदायिनी । दुरोदरं धनहरं कादर्यं कार्यहानिकृत् ॥
वाक्पारुष्यमलक्ष्मीकं मृगया पापकारिणी । नरेन्द्र दण्डपारुष्यमत्यर्थमयशस्करम् ॥२९॥
तस्मादेतानि सप्तापि व्यसनानि परित्यजेत् । बतान्यतममप्येषां मतिभ्रंशाय जायते ॥३०॥
येषामेकतरेणापि मतिभ्रंशो विधीयते । तान्यनेकानि संसेव्य कः पुमान्न प्रहीयते ॥३१॥
नीतिशास्त्रेषु विरसं निजकार्यभरालसम् । मानुषं विजहाति श्रीर्व्यसनापन्नमानसम् ॥
मुष्णन्त्युच्चैः प्रमत्तेऽस्मिन्कोशं कोशाधिकारिणः । तुदन्ति च दुरात्मनो राष्ट्रं राष्ट्राधिकारिणः ॥
तत्तद्व्यसनसक्तस्य वैचित्यमुपचीयते । वैचित्योपचयादुच्चैरौचित्यमपचीयते ॥ ३४ ॥
औचित्यापचयादेनं जनाः सर्वेऽवमन्वते । विनियुक्ताश्च कार्येषु नैव तान्याशु कुर्वते ॥
अथ क्रोधोद्धुरोत्युच्चैरुच्चरन् रुशतीं गिरम् । दिने दिने तुदत्येतान् समेतानपि संसदि ॥
ततो ह्यनुक्षणकृतासूक्ष्णक्षतचेतसः । परोक्षे परिभाषन्ते तथा चोपहसन्त्यमुम् ॥ ३७ ॥
ततो मुञ्चत्यमुं केऽपि केऽप्यमुष्मिन्नुदासते । केचिद्विपक्षपक्षान्तर्निपत्य सुखमासते ॥३८॥

प्रकोपनममुं मत्वा शपन्त्येव तु केचन । भजन्ति न यथापूर्वमत्यजन्तोऽपि केचन ॥३९॥
सप्तव्यसनसक्तत्वादज्ञानानश्छलं बलम् । मन्यते प्रभुमात्मानमहंकारेण केवलम् ॥ ४० ॥
व्यसनासक्तचित्तेन येनेत्थं बत भूयते । जैत्रयात्रापरैः सद्यः परैः स परिभूयते ॥ ४१ ॥
गिरयो नैव गुरवो गुरुरेव गुरुर्मतः । भवताऽत्र प्रभवता दत्तः सिंहाचलस्ततः ॥ ४२ ॥
प्रदत्ते द्विषतेऽमुष्मिन्विमुक्तश्चेत्स पार्थिवः । तर्हि दत्तोऽपि भवता न दत्तः सिंहपर्वतः ॥
यः सिंहपर्वतं मेने समं शाहसुमेरुणा । बिज्ञरूरं च नगरं किं कृतं तेन वैरिणा ॥ ४४ ॥
उपक्रान्तमिदानीं तु त्वया विजयमण्डलम् । सुविक्रान्तस्य नृपतेः सर्वमेव महीतलम् ॥४५॥
राजा तावत्ततो मन्त्री सुहृदो विपुलं धनम् । राष्ट्रं दुर्गाणि सैन्यानि राज्यस्याङ्गानि सप्त वै ॥
एतैरविकलैर्युक्तं राज्यं सद्भिः प्रशस्यते । एकेनापि विहीनं तदितरैरुपहस्यते ॥ ४७ ॥
मौलिर्नृपो मुखं मन्त्री धनसैन्ये भुजद्वयम् । राष्ट्रमन्यद्वपुः सर्वं सुहृदः संधयो दृढाः ॥
दुर्गाणि तु दृढान्युच्चैस्तदस्थीनि तदन्तरा । एवमङ्गानि राज्यस्य सप्तोक्तानि मनीषिभिः ॥
सप्ताङ्गस्यास्य राज्यस्य धर्म आत्माऽभिधीयते । मन्त्रः प्राणो बलं नीतिरनीतिरसमर्थता ॥
दण्डो यथोचितः शौर्यमधर्मो रिपुरुद्धतः । मदः परस्परं भेदो दीर्घमायुरभेद्यता ॥ ५१ ॥
जनरञ्जनमुत्कर्षो दर्शनं दीर्घदर्शिता । प्रतापः प्रोज्ज्वलं रूपं विमला बुद्धिरायुधम् ॥५२॥
तथैव बलवद्वैरमन्तरायः प्रकीर्तितः । प्रमादस्तु भवेन्निद्रा प्रबोधः सावधानता ॥ ५३ ॥
समं च विषमं चेति वैरं द्विविधमुच्यते । प्रथमं तु समेनाऽऽहुर्द्वितीयमधिकेन चेत् ॥
समे समत्वादुभयोर्न भवेद्विजयः खलु । अधिकस्याधिकत्वेन विषमे विजयो ध्रुवम् ॥५५॥
फतेखानप्रभङ्गेण मुसेखानवधेन च । अहर्दिवं प्रभो तुभ्यं महमूदोऽभ्यसूयति ॥ ५६ ॥
पश्य येदिलदिल्लीन्द्रौ विषयानन्तरौ तव । यवनौ बलिनौ तुभ्यं द्रुह्यतोऽहर्निशं नृप ॥
अमू उभयतो यस्य द्वेषणौ रोषणौ तव । तस्य नूनमिह स्थाने स्थितिः स्थाने न संप्रति ॥
अतोऽतिदुर्गमं स्थानमास्थाय जगतीपते । यतस्व जगतीं जेतुं किमजय्यं शिवस्य ते ॥
कण्ठेकालेन कैलासः स मेरुः शम्बपाणिना । अभ्यन्तरमपां पत्युः शिश्रिये दनुजारिणा ॥
न दुर्गं दुर्गमित्येव दुर्गमं मन्यते जनः । तस्य दुर्गमता सैव यत्प्रभुस्तस्य दुर्गमः ॥६१॥
प्रभुणा दुर्गमं दुर्गं प्रभुर्दुर्गेण दुर्गमः । अदुर्गमत्वादुभयोर्विद्विषन्नेव दुर्गमः ॥ ६२ ॥
सन्ति ते यानि दुर्गाणि तानि सर्वाणि सर्वथा । यथा सुदुर्गमाणि स्युस्तथा सद्यो विधीयताम् ॥
सुवर्णशर्मणो वाचमिमां श्रुत्वा नृपोत्तमः । माननीयोऽतिमहतां माननीयाममन्यत ॥६४॥
प्रभुत्वं बिभ्राणस्त्रिभुवनपरित्राणकरणे पितृद्वेषिद्वेषी तदनुतनुजः शाहनृमणेः ।
निरातङ्कः सक्तो यवनकदनायातिमहते समग्रामप्युर्वीममनुत वसन्तीं करतले ॥ ६५ ॥

इत्यनुपुराणे सूर्यवंशे निवासकरकवीन्द्रपरमानन्दविरचितायामध्यायश-
तसंमितायां वैयासक्यां संहितायां [ शिवं प्रति सुवर्णशर्मकृतोप-
देशो नाम ] षोडशोऽध्यायः ॥ १६ ॥

## सप्तदशोऽध्यायः ।

कवीन्द्र उवाच—

ततोऽफजलमाहूय स्वीयसैन्यधुरंधरम् । अलीशाहः स्वयं वाचमुवाच समयोचिताम् ॥ १ ॥

अलीशाह उवाच—

हितावहस्त्वमस्माकमस्मिन् सैनिकसंचये । विरोद्धा द्विजदेवानां कालः कलिरिवापरः॥२॥

प्रस्थितेन त्वया पूर्वं पृतनाव्यूहवर्तिना । रामराजान्वयभुवो राजानो युधि निर्जिताः॥३॥

कृतप्रतीपसंतापे प्रतापे तव जाग्रति । बत श्रीरङ्गराजोऽपि रणरङ्गाद्विरज्यते ॥ ४ ॥

त्वया विक्रम्य वीरेण क्षणात्कर्णपुराधिपः । सर्पो जाङ्गुलिकेनेव स्फुरद्दर्पो वशीकृतः॥५॥

त्वया मन्दरसारेण मथिता मधुरा पुरी । निगृह्य नगरीं काञ्चीमाहृतं चापि काञ्चनम्॥६॥

पदे पदे शुभवता भवता किंकरीकृतः । व्यस्मरद्वीरभद्रोऽपि च्छत्रचामरसंपदः॥ ७ ॥

बिभेति सिंहलपतिर्भक्तो लङ्कापतिस्तथा । भजत्यम्भोधिरपि मां तदिदं पौरुषं तव ॥ ८ ॥

प्रचलन्त्यचलाः सप्त चलत्यफजल त्वयि । क्षुभ्यन्ति चाब्धयः सप्त द्वीपाः सीदन्ति सप्त च॥

बतेन्द्रप्रस्थनाथोऽपि निशम्य तव पौरुषम् । रोषावेशवशीभूतो न निद्राति दिवानिशम् ॥

एतादृशि महावीरे दुर्जये त्वयि जाग्रति । मह्यं द्रुह्यत्यहोरात्रमहो शाहसुतः शिवः ॥११॥

हन्त तेन महोत्साहवता वीरेण मानिना । स्वधर्माभिनिविष्टेन म्लेच्छधर्मो विहन्यते॥१२॥

क्रमेणाऽऽक्रम्य विकटां कण्ठीरव इवाटवीम् । एष आत्मवशो नैव मन्यते मम शासनम्॥

छलप्रचलचित्तस्य खलस्यास्य समाश्रयात् । मम चित्ते चिरं धत्ते शैलः सोऽप्यसह्यताम्॥

महमूदेन पित्रा मे यदि न स्यात्स वारितः । तर्हि स्यान्मज्जितोऽम्भोधौ तेन राजपुरीश्वरः॥

स चन्द्रराजं निर्जित्य पुत्रामात्यसमन्वितम् । जयवल्लीं च नगरीमग्रहीन्निरवग्रहः ॥१६॥

दत्तोऽवरङ्गशाहाय मया यः संधिकाम्यया । नीवृन्निजामशाहस्य सपर्वतवनाकरः ॥१७॥

स तेनाऽऽत्मवशेनास्मानवमत्य प्रतापिना । परानप्यविनीतेन प्रसह्य स्ववशीकृतः ॥१८॥

अतर्कितागमोऽभ्येत्य दस्युवृत्तिपरायणः । मत्पत्तनपुरग्रामानुद्वृत्तोऽयं विलुण्ठति ॥१९॥

अहोरात्रेण पक्षेण गम्यं पक्षद्वयेन च । अत्येति स किलाध्वानं क्षणेनैवाकुतोभयः॥२०॥

अयं कौमारमारभ्य निकृतिप्रकृतिः स्वयम् । यवनानवजानाति जाग्रदुग्रपराक्रमः ॥२१॥

आक्रम्य ताम्रवक्त्राणां नगराण्युरुविक्रमः । नगरप्रभृतीन्येष चण्डचण्डमदण्डयत् ॥२२॥

स्थैर्यं निजामराष्ट्रस्य गृहीतस्यापि यत्नतः । अपि दिल्लीपतिर्नैव मनुतेऽस्माद्विशङ्कितः ॥

पितामहेन मे पूर्वं पिता तस्य विवर्धितः । शाहराजो दुर्विनीतं तं न शिक्षयितुं क्षमः ॥

अयं विगृह्य पित्रा मे निगृहीतं प्रतापिना । शाहराजं महाबाहुर्बलेनैव व्यमोचयत्॥२५॥

नो दूयते परभयादयमल्पवया अपि । अतिक्रामति चाप्यस्मान् विस्मापकपराक्रमः ॥२६॥

दिने दिने वर्धमानः प्रतापेन सह श्रिया । अयमाश्रीयते भूपैराकाङ्क्षितसमृद्धिभिः॥२७॥

शनैः शनैरेष बली पदं कुर्वन् पुरः पुरः । अस्मद्राज्यं समाच्छिद्य करिष्यति किमात्मसात् ॥
तज्जयाय पुरा वीरान्यान्यान्प्रास्थापयं मुहुः । न प्राप्ताः पुनरावृत्तिं ते तं प्राप्य प्रतापिनम् ॥
निर्वाणमरिवीराणां कुर्वाणमकुतोभयम् । त्वां विना तस्य जेतारं नान्यं पश्यामि कंचन ॥
तस्मात्त्वमेव गत्वा तं कृतदुर्गपरिग्रहम् । सविग्रहं ग्रहमिव निगृह्याऽऽनय दुर्ग्रहम् ॥३१॥

कवीन्द्र उवाच—

एवमुक्तोऽतिविश्रम्भादल्लीशाहेन मानिना । प्रोवाचाफजलः प्रीत्या प्रस्तुतार्थमयं वचः ॥

अफजल उवाच—

विश्रम्भेणापि च प्रेम्णा यदाज्ञापयति प्रभुः । तस्य कर्ता स एव स्याद्गुणीभूतस्तु किंकरः ॥
द्विषद्वर्गक्षयकरी जागर्ति किल या मयि । कार्यमादिशता साऽद्य शक्तिरुत्तेजिता त्वया ॥३४॥
उग्राय विग्रहायास्मै त्वया प्रेषयता ह्यमुम् । अवैम्यनुग्रहेणैष संगृहीतोऽनुगः स्वयम् ॥३५॥
कर्तव्यं भृत्यवर्गाय स्वामी चेन्न समादिशेत् । अस्ति नास्तीति कस्तर्हि तस्य ज्ञास्यति पौरुषम् ॥
अहमद्धा भृशं बद्ध्वा स्पर्धाकरमहर्निशम् । तमन्तकमिवोद्वृत्तमानयिष्ये तवान्तिकम् ॥
प्रविश्य देशं कार्णाटं निर्जिता शतशो नृपाः । स जयस्तमनिर्जित्य जीवतो मे निरर्थकः ॥

कवीन्द्र उवाच—

इत्युक्तवन्तमत्यर्थं समर्थबलदर्पितम् । कर्तुं प्रतिश्रुतं कर्म सद्य एव समुद्यतम् ॥ ३९ ॥
येदिलोऽफजलं तत्र प्रस्थापयितुमादृतः । तदा संभावयामास बहुभिः पारितोषिकैः ॥४०॥
ततः सरत्नपर्याणपृष्ठान्पुष्टांस्तुरंगमान् । तथैवाऽऽभरणोपेतान् भद्रजातीन्मतंगजान् ॥४१॥
तनुत्राणि शिरस्त्राणि शस्त्राणि विविधानि च । विचित्राणि च वस्त्राणि निजानि विरुदानि च ॥
तिरस्कृतविमानानि याप्ययानान्यनेकधा । रौप्यान् रौक्मांश्च पर्यङ्कान् करङ्कांश्च पतद्ग्रहान् ॥
रत्नोत्तंसानथो मुक्तास्रजो हीराङ्गदानि च । कटकान्यूर्मिकाश्चापि चित्ररत्नचयाङ्किताः ॥४४॥
तथा द्वीपान्तरोत्थानि जातिश्रेष्ठान्यनेकशः । अल्लीशाहादफजलः प्रापत्कोषांश्च कोटिशः ॥
वज्रधारामिव शितां रत्नकोषनिवेशिताम् । निजां पाणिस्थितां प्रादात्प्रभुस्तस्मै कृपाणिकाम् ॥
स्वामिनैवाथ विन्यस्तां प्रेम्णा सारसनान्तरे । सरत्नकोषाभरणां स बभार कटारिकाम् ॥४७॥
ततः पुनः पुनस्तस्मै प्रीत्या प्रास्थानकालिकीः । कृत्वा नतीरफजलः प्रचचालाचलोपमः ॥
प्रचलन्तममुं तावत्प्रणमन्तं मुहुर्मुहुः । पदे पदेऽनुजग्राह दिशन्नीशो दयादृशम् ॥४९॥
तं वीरमान्यं सेनान्यं स विधाय महामनाः । अन्यानमूंश्चमूनाथांस्तत्साहाय्ये समादिशत् ॥
अम्बरः शम्बरसमः प्रतापी यांकुतः पुनः । महामानी मुसेखानः पठानो हसनोऽपि च ॥
रणदूलहसूनुश्च रणदूलहसंज्ञकः । तथैवाङ्कुशखानोऽपि निरङ्कुशगजक्रमः ॥ ५२ ॥
बर्बरः खेलकर्णस्य प्राप्तो यः क्रीतपुत्रताम् । स हिलालो महाबाहुः प्रत्यर्थिद्रुमकुंजरः ॥
इत्येतेऽन्ये च यवनाः ससैन्याः ससुहृद्गणाः । सद्यः स्वामिसमादिष्टास्तं सेनापतिमन्वयुः ॥

जितानेकप्रतिभटाः प्रसभं सभरोद्भटाः । घोरकर्मकृतो घोरफटा अपि तमन्वयुः ॥५५॥
पाण्डरो नायकश्चैवं खराटोऽपि च नायकः । कल्याणयादवश्चापि नैकसैनिकनायकः ॥
समुद्यद्युद्धसंरम्भो मम्बो भृशबलस्तथा । विश्वविश्रुतकर्माणो घाण्टिकाः काण्टिका अपि ॥
इत्येतेऽन्ये च राजानः सामन्ताश्च सहस्रशः । चतुरङ्गचमूयुक्तास्तं सेनापतिमन्वयुः ॥५८॥
ततः कार्तान्तिकादिष्टे समये तस्य गच्छतः । अभव्यशंसीन्यभवन्दुर्निमित्तान्यनेकशः ॥
सपक्षपातं क्रोशन्तः प्रकामं वामगामिनः । वृथेति कथयामासुर्वायसास्तस्य साहसम् ॥
वत भेजे दिनार्धेऽपि भानुरस्पष्टभानुताम् । प्रजज्वालेवान्तरिक्षं बभूवुर्धूसरा दिशः ॥६१॥
सहसैव महत्युल्का निपपात दिवस्तटात् । घनं विनैव च व्योम्नि बभूवाशनिनिस्वनः ॥
ववाशिरे प्रतिभयं दिशमैन्द्रीं श्रिताः शिवाः । भङ्गमाप ध्वजो यानान्यप्रहृष्टानि चाभवन् ॥
अवाप सदृषद्रेणुवर्षी वातः प्रतीपताम् । बभ्रामाग्रे प्रणुन्नोऽपि वारणः पृतनाग्रणीः ॥६४॥
यद्यप्येतानि चान्यानि तन्निमित्तान्यवारयन् । तथाऽपि स रणोत्साहं नामुञ्चन्नमुचिर्यथा ॥
ततः स प्रस्थितस्तस्मात्पत्तनाद्विजयाह्वयात् । योजनार्धमिते देशे वसतिं स्वामकल्पयत् ॥
तत्राऽऽगताभिरभितो वाहिनीभिः समन्वितः ।स विवेशोन्मुखः सैन्यव्यूहोऽम्भोधिरिवाऽऽबभौ
महार्हवर्णैरुच्छ्रायच्छादितव्योममण्डलैः । नवैरुत्तम्भितस्तम्भैर्मण्डितं पटमण्डपैः ॥६८ ॥
प्रोल्लसत्काण्डपटकप्राकारमयमण्डपम् । विचित्रासनविस्तारप्रस्तारितसभान्तरम् ॥ ६९ ॥
पुञ्जीकृतेष्टभूयिष्ठवस्तुसंभारभासुरम् । उच्चैरुत्तानितोल्लोचप्रच्छायाञ्चितचत्वरम् ॥ ७० ॥
अविदूरपुरोदेशद्रुयानद्धतुरङ्गमम् । समदद्विरदव्यूहबृंहितस्पृष्टदिक्तटम् ॥ ७१ ॥
जागरूकैरहोरात्रं गुटिकायन्त्रधारिभिः । कोदण्डिभिस्तथाऽन्यैश्च खड्गखेटकपाणिभिः॥७२॥
अपरैश्च तथा पारश्वधिकैः शक्तिहेतिकैः । अभिगुप्ताष्टदिग्भागमभितःस्थितिशालिभिः॥७३॥
तदनेकानकोदग्रवाद्यनिर्घोषभीषणम् । तत्तत्कार्यविधिव्यग्रजनकोलाहलाकुलम् ॥ ७४ ॥
यथास्थानस्थिताशेषजनलब्धसुखोदयम् । सैन्यं सैन्यपतिः सर्वं गुरुगर्वं व्यलोकत ॥७५॥

संग्रामे साभिमानः स भृशमफजलः स्वामिनो लब्धमानः ।
शौर्यश्रीशोभमानः सपदि भृशबलं भूपतिं जेतुकामः ।
दुर्दैवाकृष्टचित्तः पथि पथि परितो दुर्निमित्तानि पश्यन्
वैराटं राष्ट्रमन्तर्गतगुरुनिकृतिः क्षिप्रमभ्याससाद ॥ ७६ ॥

इत्यनुपुराणे सूर्यवंशे निवासकरकवीन्द्रपरमानन्दविरचितायाम-
ध्यायशतसंमितायां वैयासक्यां संहितायामफजलाभ्या-
गमो नाम सप्तदशोऽध्यायः ॥ १७ ॥

# अष्टादशोऽध्यायः।

मनीषिण ऊचुः—

उपेक्ष्य स खलः कस्माच्छिवं पुण्यपुरस्थितम्। वैराटमेव विषयं ययौ सेनासमन्वितः॥

कवीन्द्र उवाच—

साहंकारः शिवं जेतुं स कालयवनद्युतिः। यवनोऽफजलस्तूर्णं प्रस्थितः स्वामिशासनात्॥
वैराटमेव विषयं प्राविशद्येन हेतुना। तमहं संप्रवक्ष्यामि शृणुध्वं भो मनीषिणः॥ ३॥
निगृह्य बाजराजं तं कृष्णराजं च दुर्मदम्। जनकं च तयोश्चन्द्रराजमाजौ महौजसम्॥
अव्यक्तवर्तनीयुक्तां सह्यपर्यन्तवर्तिनीम्। अटवीप्रायविषयां महादुर्गसमाश्रयाम्॥ ५॥
उन्निद्रसैनिकोदग्रामाद्रिप्राकारमध्यगाम्। जयवल्लीं नाम पुरीमग्रहीद्दुर्ग्रहां शिवः॥ ६॥
ये येऽत्र चन्द्रराजस्य सहायाश्च सनाभयः। तांस्तानशातयद्वीरः शिवः शक्तिमतां वरः॥
तदा प्रतापवर्मा यश्चन्द्रराजस्य बान्धवः। पलायितः शिवभयाद्येदिलं प्रत्यपद्यत॥ ८॥
चन्द्रराजपदाकाङ्क्षी मन्त्रविन्मन्त्रिभिर्युतम्। येदिलं प्रीणयामास चिरं स परिचर्यया॥
तं देशं चन्द्रराजस्य महावनसमाश्रयम्। तस्मादाच्छिद्य नृपतेर्दास्यामि भवते ध्रुवम्॥
येदिलस्येति वचसा तदा सोऽपहृतव्यथः। चकाराफजलस्याभिक्रमकर्मसहायताम्॥ ११॥
ततोऽभिमानिना तेन चन्द्रराजसनाभिना। भेदं निवेद्याफजलो वैराटं समनीयत॥ १२॥
जयवल्ली वशे यस्य वैराटं तस्य सर्वथा। तथा सह्याद्रिरखिलः सान्तरीपश्च सागरः॥ १३॥
इति मत्वा स यवनस्तामेवाऽऽदातुमादितः। समुद्यतो महाबाहुर्द्रुतं वैराटमाययौ॥ १४॥
ततः समेत्य सैन्येन वैराटं राष्ट्रमास्थिते। यवनेऽफजले तूर्णं जयवल्लीं जिघृक्षति॥ १५॥
शिवराजः कृती तत्र प्रतीकारपरायणः। प्रभुः प्रभूतदर्पत्वादिदमात्मन्यचिन्तयत्॥ १६॥
येदिलेन विसृष्टोऽसौ मयि रुष्टेन मानिना। करिष्यत्यात्मसदृशं पौरुषं पु(प)रुषक्रमः॥ १७॥
स एष यवनो यस्य दुर्नयेन गरीयसा। अहो कलियुगस्यास्य माहात्म्यमुपचीयते॥ १८॥
दुर्नयेन भृशं येन निशुम्भसमतेजसा। अवाज्ञायत वै देवी तुलजापुरवासिनी॥ १९॥
यः सदैवानस्तिदयो रोषणो राशिरंहसाम्। द्विजानक्षिगतानाक्षिगतानिव जिघांसति॥ २०॥
पर्वतः पातकस्येव सर्वतः सुमदोद्धतः। पद्धतिं वर्णधर्माणां रोद्धुं यो हि व्यवस्थितः॥
निषेद्धा सर्वधर्माणामधर्माणां विवर्धकः। स मया हन्त हन्तव्यः समया समुपागतः॥ २२॥
हविष्प्रकृतयो गावः पयसा सर्पिषाऽपि च। विधये सप्ततन्तूनां विधिना विहिता भुवि॥ २३॥
तासामसौ तामसात्मा हन्ता हन्त दिने दिने। विपर्यासयितुं धर्ममशेषमपि वाञ्छति॥
इयं वसुंधरा देवी धर्मेण खलु धार्यते। ध्रुवं स धार्यते देवैस्तेऽधार्यन्त द्विजातिभिः॥
अतः सर्वस्य लोकस्य मूलमेते द्विजातयः। पालनीयाः प्रयत्नेन पूजनीयाश्च सर्वदा॥

सुराणां भूसुराणां च सुरभीणां च पालनम्। विदधाम्यहमेवाद्धा भूत्वा भूत्वा युगे युगे ॥२७॥
येनाम्भोनिधिमाविश्य बिभ्रता मीनरूपताम्। हतः शङ्खासुरः संख्ये श्रुतयश्चाप्युपाहृताः ॥
अधारि मन्दरो येन पृष्ठे स्वे कमठात्मना। तथा चाऽऽधारतामेत्य व्यधायि वसुधा स्थिरा ॥
उद्धृत्य वसुधां सद्यः समुद्राद्दंष्ट्रया स्वया। येन वाराहरूपेण हिरण्याक्षो निषूदितः ॥३०॥
हरेर्यवीयसा येन हरिणा ह्रस्वरूपिणा। अलं छलं कलयता बलिर्नीतो रसातलम् ॥३१॥
आविर्भूय सभास्तम्भान्नरसिंहत्वमीयुषा। व्यदारि करजैर्येन हिरण्यकशिपोरुरः ॥ ३२ ॥
भृगुवंशावतंसेन रैणुकेयेन येन वै। कार्तवीर्यं निहत्याऽऽजौ कृता निःक्षत्रिया मही ॥
येन दाशरथीभूय निबद्धाम्भोधिसेतुना। दशकण्ठशिरःश्रेणी शरेणैकेन पातिता ॥३४॥
वृष्णिवंशावतंसेन येन शूरेण शौरिणा। धर्मं व्यवस्थापयता हताः कंसादयः खलाः ॥३५॥
स विष्णुः सर्वदेवानां सर्वस्वमहमीश्वरः। हर्तुं भारमिमं भूमेराविर्भूतोऽस्मि भूतले ॥३६॥
यवनानाममी वंशाः सर्वेऽप्यंशाःसुरद्विषाम्। जगतीं निजधर्मेण निमज्जयितुमुद्यताः॥३७॥
तस्मादेतान्हनिष्यामि दानवान्यवनाकृतीन्। प्रथयिष्यामि धर्मस्य पन्थानमकुतोभयम् ॥
जयवल्लीवनं घोरं गृहं कण्ठीरवस्य मे। विशन्निधनमागन्ता द्विषन्नफजलो गजः ॥ ३९ ॥
समुत्पतन्पक्षबलादलक्षितनिजान्तकः। पतंग इव मां लब्ध्वा स वै निधनमेष्यति ॥ ४० ॥
इति चित्ते विनिश्चित्य स शिवः पुरुषोत्तमः। संदिश्य निजसेनान्यं रिपुराष्ट्रविकर्षणे ॥
नरानधिकृतांस्तत्तत्कार्येष्ववहितान्हितान्। नियुज्य निजराष्ट्रस्य दुर्गाणां चाभिगुप्तये ॥
स्वयं षाड्गुण्यनिपुणः परवीरविमर्दनः। परीतः पत्तिसैन्येन जयवल्लीमुपागमत् ॥ ४३ ॥
अथ गुप्तङ्गिताकारमपारभुजपौरुषम्। प्रतीतमन्यैरजितं शक्तित्रयसमन्वितम् ॥ ४४ ॥
जयवल्लीमधिष्ठाय स्वयं योध्दुमवस्थितम्। संनद्धानीकनिवहं निशम्याफजलः शिवम् ॥ ४५ ॥
व्यसृजद्वाचिकं तस्मै सर्वार्थविदुषे यथा। तथा निशम्यतां सर्वं विबुधाः कथयामि वः ॥

अफजल उवाच—

विदधाति यदौद्धत्यं भवानद्य पदे पदे। तद्येदिलस्य हृदये भजते शल्यरूपताम् ॥ ४७ ॥
गते निजामे विलयं गमितः स्वीयतां स्वयम्। येदिलेन वितीर्णो यस्ताभ्रेभ्यः संधिकाम्यया ॥
स एष विषयस्तेषां गिरिदुर्गसमाश्रयः। गृहीतः संगृहीतश्च शाहराजात्मज त्वया ॥ ४९ ॥
भवता सततं लाभवता तत्र पदे पदे। गृहीतविषयः क्रुद्धो रुद्धो राजपुरीश्वरः ॥ ५० ॥
त्वयेदं चन्द्रराजस्य गाढमन्यदुरासदम्। अभिक्रम्य च विक्रम्य प्राज्यं राज्यं हृतं हठात् ॥
त्वया गृहीत्वा कल्याणं तथा भीमपुरीमपि यवनानां महासिद्धिनिलयाः किल पातिताः ॥
तुभ्यं कुप्यन्ति तेऽद्यापि यवनाः पवनाशनाः। अपहृत्यापि सर्वस्वं कृता येषां विडम्बना ॥
निगृह्य यवनाचार्याननविचार्याऽऽत्मनो बलम्। प्रतिबध्नास्यविद्धानामध्वानमकुतोभयः ॥
यच्चक्रवर्तिचिह्नानि धत्से स्वयमभीतवत्। अभ्यारोहसि च स्वर्णसिंहासनमनीतिमान् ॥

स्वयमेवानुगृह्णासि निगृह्णासि च मानवान् । अहो आत्मवशो नम्यान्न नमस्यभिमानवान् ॥
दुर्निवारगतिर्यस्माद्यस्मात्कस्माद्बिभेषि न । तस्मादहं प्रेषितोऽस्मि येदिलेन प्रतापिना ॥
येदिलस्य नियोगाद्यन्मया सह समागतम् । उद्योजयति सद्यो मां तदिदं षड्विधं बलम् ॥
मुसेखानादयो ह्येते त्वया सह युयुत्सवः । प्रोत्साहयन्ति मामत्र जयवल्लीं जिघृक्षवः ॥ ५९ ॥
तदद्य मन्नियोगेन संधिमेव महीपते । विधेहि देहि सकलानचलानचलामपि ॥ ६० ॥
सिंहं लोहं महान्तं च प्रबलं च शिलोच्चयम् । पुरंदरं गिरिं तद्वत्पुरीं चक्रावतीमपि ॥
विषयं च तथा नीराभीमरथ्यन्तराश्रयम् । प्रणिपत्य प्रयच्छाऽऽशु दिल्लीन्द्रायामितौजसे ॥
या चन्द्रराजादाच्छिद्य गृहीता निग्रहात्त्वया । जयवल्लीमिमामल्लीशाहस्त्वां तां हि याचते ॥

उपनतमहितस्य पत्रलेखं रहसि निशम्य तमेतमेकवीरः ।
स किल सकलराजलोकरत्नं न्यधित निजे हृदि कंचिदेव यत्नम् ॥ ६४ ॥

स्मृत्वा मन्त्रमथेप्सिताय जगतः सर्वस्य सर्वोत्तरं
यत्संप्रेषितवानसौ नरपतिः पत्रस्य तस्योत्तरम् ।
यच्चागादभिमानवानफजलः सज्जस्य तस्याटवीं
तत्सर्वं कथयामि वः सुमतयः श्रेयस्करं श्रूयताम् ॥ ६५ ॥

इत्यनुपुराणे सूर्यवंशे निवासकरकवीन्द्रपरमानन्दविरचितायामध्याय-
शतसंमितायां वैयासक्यां संहितायां [ शिवं प्रत्यफजल ]
संदेशादेशनं नामाष्टादशोऽध्यायः ॥ १८ ॥

## एकोनविंशोऽध्यायः ।

कवीन्द्र उवाच—

नियोजयन्स सर्वत्र दृशं प्रणिधिरूपिणीम् । पश्यत्यवहितः सर्वं शिवो बाह्यं तथाऽऽन्तरम् ॥
ततोऽसौ दूतमाहूय निष्णातं निजकर्मणि । प्रतिवाचमिमां तस्मै प्राहिणोत्परिपन्थिने ॥ २ ॥

शिवराज उवाच—

समस्ताः समरे येन ध्वस्ताः कार्णाटभूमिपाः । तस्य तेऽद्य मयि श्रेयानियानपि दयोदयः ॥
अतुलं ते बाहुबलं बलं च तुलितानलम् । अलंकृतं क्षितितलं त्वया त्वयि नहि च्छलम् ॥
दिदृक्षुरसि यद्येतान्विभवान्वनसंभवान् । तद्विलोकयतान्मेत्य जयवल्लीमिमां भवान् ॥ ५ ॥
तवाऽऽगमनमेवेतः सांप्रतं वेद्मि सांप्रतम् । अभयं मम तेनैव भविताऽपि च वैभवम् ॥ ६ ॥
तृणाय मन्ये ताम्राणामनम्राणामनीकिनीम् । येदिलस्य च तां तद्वत् त्वां विना तीव्रविक्रमम् ॥
दत्तः पन्थास्त्वमागच्छ प्रयच्छामि शिलोच्चयान् । भवते याचमानाय जयवल्लीमिमामपि ॥ ८ ॥
प्रेक्ष्य दुष्प्रेक्षणीयं त्वामिह विश्रब्धमानसः । इमां पुरःकरिष्यामि निजपाणिकृपाणिकाम् ॥
वनीमिमां ते पृतना प्रतनामतनीयसीम् । पश्यन्ती सुतलच्छायासुखान्यनुभविष्यति ॥ १० ॥
इति सूत्रमिवात्यल्पवर्णं बह्वर्थसंयुतम् । शिवः संदेशमादिश्य व्यसृजद्दूतमात्मनः ॥ ११ ॥

स तं संदेशमाकर्ण्य शिवदूतेन भाषितम्। स्वामिकार्यं कृतं स्वेनेत्यमन्यत सुदुर्मतिः ॥१२॥
वैराटस्थोऽपि सुतरां योजनत्रयसान्तराम्। जयवल्लीं स यवनः स्वहस्तस्थामवागमत् ॥१३॥
अथाऽऽस्थाय स आस्थानीं समाहूय स्वसैनिकान्। वाचमेतां नयोपेतां व्याजहार महामनाः ॥

अफजल उवाच—

समाह्वयति मां तत्र स शिवः संधिकाम्यया। स्वामिकार्येप्सुना तत्र प्रयातव्यमितो मया ॥
समुन्नद्धैः सुसन्नद्धैः सैनिकैः स्वैः समीयुषाम्। सदैवोज्जागरूकाणां न तत्र भयमस्ति नः ॥
समुह्य व्यूह्य सैन्यानि यास्यामस्तत्र सर्वथा। अहो यत्र वने घोरे नैव नाभास्वती कथा ॥
द्विपद्वीपिशरण्यानामरण्यानामुदीक्षणम्। भवताद्भवतां तत्र विश्रान्तानामनुक्षणम् ॥१८॥
तत्र भूभृत्तटावन्यां वन्यां वक्ष्य महीयसीम्। वन्या इव विनाऽऽलानं क्रीडन्तु करिणो मम ॥
प्रपतेदपि चाऽऽकाशं निपतेयुः शतह्रदाः। तदप्यफजलस्यास्य न भवेन्मतिरन्यथा ॥२०॥
क्षितिमुत्खातयिष्यामि पातयिष्यामि पर्वतान्। वनानि च प्रधक्ष्यामि सद्यः क्रोधकृशानुना ॥
प्रतिज्ञां पारयिष्यामि भ्रंशयिष्यामि देवताः। नाऽऽदास्यते स चेन्माऽद्यान्मदीयमुचितं वचः ॥
इति ब्रुवाणमास्थानभ्राजमानासनस्थितम्। दैवध्वस्तधियस्ते तु न तं प्रत्याचचक्षिरे ॥ २३॥
अथ तं मन्त्रिणः सर्वे पुरः प्रस्थातुमुद्यतम्। इति नीतिमुपाश्रित्य विनयेन व्यजिज्ञपन् ॥

मन्त्रिण ऊचुः—

स्वामिन्विधीयतामेव भवताऽऽत्मचिकीर्षितम्। प्रत्याख्याताऽस्तु कस्तस्य यत्र दैवमवस्थितम्
प्रशस्तेन स्वचित्तेन विश्वस्तः स यदि त्वयि। तर्हि सद्यः समायातु जयवल्लीवनाद्बहिः ॥
उपाहरतु सर्वस्वमात्मीयं भवतो मुदे। निजां नामयतु ग्रीवां नमन्निह पदे पदे ॥ २७॥
येन कौमारमारभ्य धन्विना धूर्जटिं विना। स्वप्नेऽपि स्वामिनेऽन्यस्मै न निजं नामितं शिरः॥
बाल्यात्प्रभृति लोकेऽस्मिन्ननल्पबलशालिनः। कर्माण्यमानुषस्येव प्रायो यस्येह शुश्रुम ॥
विगायति च यो लोके यवनानां विलोकनम्। निजधर्मधुरीणोऽद्धा शृणोति च न तद्वचः ॥
स आह्वयति तत्रैव भवन्तमभयो यदि। तर्हि मन्यामहे तस्य विद्यते साहसं हृदि ॥ ३१ ॥
पदे पदे परिश्लिष्टकर्मारकुलसंकुला। न गताय हिताऽश्वानां विषमा नगभेदिनी ॥ ३२ ॥
श्लिष्टाग्रनोकहशतैः श्लिष्टारोहावरोहया। स्तम्बेरमाः कथं यान्तु तया पर्वतपद्यया ॥३३॥
आत्मा त्वमल्लीशाहस्य शल्यं दिल्लीन्द्रवक्षसः। स्वामी सेनामतल्लीनां विश मा विषमाटवीम् ॥
योगीव विजिताहारविहारो विजितासनः। यः सर्वस्यापि लोकस्य वेत्त्यहो गुप्तमाशयम् ॥
उत्प्लुत्य पर्वतशिरः प्राकाराभ्यान्तरस्थितान्। निहन्ति यो जिह्मगतीन्परान्पतगराडिव ॥
यस्य यातमविज्ञातं भवत्यमितयोजनम्। अवैति मनसैवाऽऽसं द्विषन्तमपि यो जनम् ॥३७॥
भवताऽपकृता पूर्वं भवतापकृता स्वयम्। विधत्ते तुलजादेवी सततं यत्सहायताम् ॥ ३८ ॥
तेन विद्विषताऽनेकसैन्ययुक्तेन पालिताम्। कथं त्वं तामरण्यानीमभिमानी गमिष्यसि॥३९॥
इत्याकर्ण्य वचस्तेषां स विद्वेषान्धमानसः। प्रोवाच ताननादृत्य दृप्तः शोणविलोचनः ॥४०॥

अफजल उवाच—

जन्मप्रभृति दृप्तात्मा योऽस्मभ्यमपराध्यति। स परः स्वयमस्माकं पर्भ्यर्ण कथमेष्यति ॥ ४१॥

यदमानुषकर्मेति तं प्रशंसथ मानुषम् । अवैमि तदविज्ञाय मदीयमपि पौरुषम् ॥४२॥

धावद्वाहखुराञ्चलैर्विदलितं कार्णाटकानां बलं
तत्तत्स्थानभिदा च संप्रति पराभूतं सुराणां कुलम् ।
तं सर्वोन्नतमन्तकोऽपि सहसा कोपानलव्याकुलं
मां दृष्ट्वा समया मया सह भयाद्धन्ताद्य संघास्यति ॥ ४३ ॥

या युष्मानतिविक्रमानपि भिया संयोजयन्ती तता
नैकानोकहसंवृता प्रतिभटैर्युध्यद्भिरप्यन्विता ।
तामेतामटवीमतीवविषमां सद्यः करिष्ये समां
व्याहृत्येति हि तान् हितान् कुमतिना तेन प्रतस्थेतमाम् ॥ ४४ ॥

इत्यनुपुराणे सूर्यवंशे निवासकरकवीन्द्रपरमानन्दविरचितायां
मध्यायशतसंमितायां वैयासक्यां संहितायामफजलप्रयाणं
नामैकोनविंशोऽध्यायः ॥ १९ ॥

## विंशोऽध्यायः ।

कवीन्द्र उवाच—

अत्रान्तरे भगवती तुलजा भक्तवत्सला । स्वं रूपं दर्शयामास शिवाय जगतीजिते ॥१॥

कल्पवल्लीमिव नवां पुरस्तादथ तां स्थिताम् । सरत्नाभरणां शोणचरणां चम्पकप्रभाम् ॥२॥

विलसन्नीलवसनां नीलधम्मिल्लशालिनीम् । अतीवसुकुमाराङ्गीं कुमारीवेषधारिणीम् ॥३॥

पूर्णेन्दुवन्द्यवदनामिन्दीवरविलोचनाम् । मन्दस्मितामभिनवप्रवालतुलिताधराम् ॥ ४ ॥

भ्राजिष्णुभालतिलकां रत्नरञ्जितकर्णिकाम् । मनोज्ञनासिकान्यस्तचित्ररत्नमयूरिकाम् ॥

मृदुबाहुलतां पद्महस्तां सुललिताङ्गुलिम् । रत्नरश्मिकुलाकीर्णकङ्कणां शुभलक्षणाम् ॥६॥

कण्ठसंसक्तगुच्छार्धगुच्छरत्नललन्तिकाम् । सुवर्णसुमनःश्लिष्टनीलकञ्चुलिकावृताम् ॥७॥

आनाभिविलसद्धारां रत्नकाञ्चीकृतश्रियम् । वरदां विश्वजननीमवनीपतिरैक्षत ॥ ८ ॥

अथ तद्दर्शनोल्लासभृशसंजातसंभ्रमः । प्रश्रयेणाऽऽदिमायां तामनंसीत्स मुहुर्मुहुः ॥ ९ ॥

प्रणमन्तं तु तं देवी समुत्थाप्याऽऽत्मपाणिना । दृशा दयार्द्रया भक्तमपश्यज्जगदीश्वरी ॥

अभिष्टूय सहस्रेण नाम्नां स्थितमथाग्रतः । तमुवाचेति सा देवी सुदती सस्मितानना ॥

देव्युवाच—

उपेत्यफजलो नाम योऽयं यवनपुंगवः । स एष सच्छलो वत्स त्वया सह युयुत्सति ॥

कलिकालतरोर्मूलं प्रतिकूलं दिवौकसाम् । तमिमं यवनात्मानं दुर्मदं विद्धि दानवम् ॥१३॥

अवध्यं सर्वदेवानां दशाननमिवापरम् । सहितं सर्वसैन्येन मोहितं मायया मया ॥१४॥
सहसैव समायातमन्तकस्य तवान्तिकं । तममुं हतमेवेति त्वमवेहि महीपते ॥ १५ ॥
उद्भवन्तं निरोधाय धर्मस्येह मुहुर्मुहुः । तमेनमसिपातेन महता भुवि पातय ॥ १६ ॥
क्षरद्रुधिरधारार्द्रप्रतीकमपमस्तकम् । स्रस्तबाहुलतं व्यस्तप्रसारितपदद्वयम् ॥ १७ ॥
गृध्रगोमायुभल्लूकारिष्टोत्कृष्टान्त्रसंचयम् । पश्यन्तु विबुधाः सर्वे तमिमं पातितं भुवि ॥१८॥
त्वं यदा वासुदेवोऽभूस्तदाऽहं नन्दमन्दिरे । त्रिदिवात्तव साहाय्यविधानार्थमवातरम् ॥१९॥
इदानीमपि दैत्यारे विमुच्य तुलजापुरम् । उपेताऽस्मीति जानीहि साहाय्यायैव ते स्वयम्॥
यथाजातेन कंसेन यथाऽहमवमानिता । पूर्वं तथाऽधुनैतेनाप्यवज्ञाताऽस्मि पाप्मना॥२१॥
विधिना विहितोऽस्त्यस्य मृत्युस्त्वत्पाणिनाऽमुना । अतस्तिष्ठामि भूत्वाऽहं कृपाणी भ्रमणे तव
व्याहरन्तीति शर्वाणी तत्कृपाणीमवीविशत् । असौ जाग्रदवस्थोऽपि तत्स्वप्नवदमन्यत ॥
ततोऽसौ तुलजां देवीं ध्यायं ध्यायं निजे हृदि । समस्तमपि भूभारममंस्त हृतमात्मना ॥
तिष्ठन्नयं प्रतापाद्रिशिरःप्राकारसंसदि । आन्नाय्य न्यगदद्वाचं पत्तिसेनापतीनिति ॥ २५ ॥
समाहूतो मया सैन्यसमवेतो महाशयः । इत एव समायाति स म्लेच्छः संधिकाम्यया ॥
तदद्य मन्नियोगेन युष्माभिरनिवारिता । संपश्यत्वटवीमेतामेता परपताकिनी ॥ २७ ॥
मिथो मद्वीक्षणाकाङ्क्षी स मां योधैरुदायुधैः । भवद्भिः सहितं श्रुत्वा भयं संभावयेदपि॥२८॥
तस्माद्विशत वै सर्वे गहनं गहनोदरम् । यूयं परैरविज्ञाताः सज्जाः संनिहिता अपि ॥
स्वयं विहितसंधोऽपि न संधास्यति यद्यसौ । तर्हि निघ्नन्तु तत्सेनां जातेऽस्मद्दुन्दुभिध्वनौ ॥
रहस्यमिव राजेन्द्रो रहस्तानित्युपादिशत् । परोऽपि सेनया सार्धं तं पन्थानमथाऽऽसदत्॥
विसंकटदृषद्घृष्टजानुभ्रश्यद्दृढत्वचः । अध्यारोहन् करटिनः कथंचिदथ तं गिरिम् ॥
निषादिनुन्नाः करिणो द्रुमाणां वर्त्मवर्तिनाम् । बुध्नानधुरवाग्भावभिया शुण्डाग्रमण्डलैः ॥
उत्तारितमहाभारलघवोऽप्युन्नतेऽध्वनि । शरीराण्येव करभाः स्वानि भाराय मेनिरे ॥३४॥
सप्तयो वल्लभधरैर्नीयमानाः शनैः शनैः । अवरूढहयारोहा अप्यायन्त कथंचन ॥३५॥
प्रपातपातकातर्याद् धृतेषु बत पाणिभिः । क्षुपेषु मुक्तमूलेषु केचित् पेतुरवाङ्मुखाः ॥
आरोहन्मत्तमातङ्गपदाभिहतिनिःसृतैः । पतद्भिरुपलैः स्थूलैर्विध्वस्तोऽधःस्थितो जनः ॥
लताप्रतानसंमिश्रत्वक्सारान्तरचारिणी । वीतध्वजपटा वीतच्छत्रा साऽभूदनीकिनी ॥३८॥
प्रमत्ततरमातङ्गकरसंपर्कभीरवः । तत्र तत्यजुरात्मानं भृगुपातेन केचन ॥ ३९ ॥
प्रोच्चप्रपातपर्यन्तस्रस्तहस्तपदैस्तदा । कैश्चित्पतद्भिरन्येऽपि बहवः स्वसखीकृताः॥४०॥
एवमारुह्य तं शैलं सर्वा यवनवाहिनी । परिम्लानाऽपि सा धैर्यादवरोहे मतिं दधे ॥४१॥
स्तम्बेरमास्तमारुह्य पर्वतं पर्वता इव । मन्दं मन्दमथारोहन्नुज्झन्तो मदमात्मनः ॥४२॥

आरुह्य भूधरममुं यथा त्रिदशभूतलम् । तथाऽवरुह्य तैर्लोकैर्बतालोकि तलातलम् ॥ ४३ ॥
अथ पर्वतमध्यस्थां गम्भीरां कन्दरामिव । सिंहव्याघ्रवराहर्क्षतरक्षुकुलसेविताम् ॥ ४४ ॥
वज्रपाणिमणिश्यामवनां वज्रमयीमिव । तमोम्बुनिधिसंभूतां ततां विषलतामिव ॥ ४५ ॥
तलातलस्येव महीमहीनगुणशालिना । त्रिजगज्जयिना नित्यं शिवेन परिपालिताम् ॥
दिवाकरकरास्पृष्टतलां प्रच्छायसंकुलाम् । अभ्यागच्छन्नफजलो जयवल्लीं व्यलोकत ॥
उपेत्य जयवल्लीं तामसावफजलो बली । इयं मया गृहीतेति निजे चेतस्यचिन्तयत् ॥
शिवराजोऽपि तं श्रुत्वा जयवल्लीमुपागतम् । मम पाणितलं दैवादयमायात इत्यवैत् ॥
ततः कुमुद्वतीकूले कीचकव्रजसंकुले । निरुत्सवा इव भयादवात्सुर्मिलिताः परे ॥ ५० ॥
भयमीयुः प्रतिभये यत्र ते तस्य सैनिकाः । स एकोऽफजलस्तत्र साभिमानो बिभाय न ॥
ततः प्रोच्छ्रायितोद्दामपटमण्डपमण्डितम् । निबद्धनिगडालाननियन्त्रितमदाद्विपम् ॥ ५२ ॥
निखातशङ्कुसंबद्धसैन्धवश्रेणिसंयुतम् । सद्यः संदानितानेकक्रमेलककुलाकुलम् ॥ ५३ ॥
पण्यपूर्णापणाकीर्णविपणिभ्राजितान्तरम् । व्रजदाव्रजदुद्भ्रान्तजनस्वनभरान्वितम् ॥ ५४ ॥
अत्यायतं वनावन्यामनायतमिव स्थितम् । दृश्यमप्याददे तत्र तदनीकमदृश्यताम् ॥ ५५ ॥
शिवश्चाफजलश्चोभावपि तावदनामयम् । प्रष्टुं निजं निजं दूतं न्ययुञ्जातां परस्परम् ॥
शिवस्याफजलो वेद हृदयं स च तस्य तत् । तं विधिं तु विधिर्वेद वेद संधिविधिं जनः ॥
देयान्युपायनान्यस्मै प्राप्तायातिथये मया । निजनीत्युनुरोधेन तत्सुतेभ्योऽपि सर्वथा ॥
मुसेखानायाङ्कुशाय याकुतायाम्बराय च । तथा हसनखानाय परेभ्यश्च पृथक् पृथक् ॥
तथैव मम्बराजाय पितृव्याय गरीयसे । तत्तद्रत्नपरीक्षा च कारणीयाऽस्ति वै पुनः ॥
इत्थमानायितास्तेन राज्ञा विपणिनो यदा । तदा तेऽफजलादिष्टाः शिवस्यान्तिकमाययुः ॥
स्वानि स्वानि समानीतान्यथ रत्नानि तानि ते । धनिनो दर्शयामासुः शिवायाऽऽशु जिघृक्षवे ॥

आहूतेभ्यः स तस्मादफजलकटकात्तत्र तेभ्यो धनिभ्यः
सर्वाण्यादत्त रत्नान्यथ निजसविधे तान् समस्तान्यधत्त ।
लब्धात्मानस्तदानीं विधिविहतधियो भूरिभारानुरोधा-
दज्ञा नाज्ञासिषुस्ते बत गिरिशिखरे सर्वतः स्वं निरोधम् ॥ ६२ ॥

विश्रब्धो मयि वर्तते शिवमहीपालः स तस्मादहं
तस्योपान्तमुपेत्य सांप्रतममुं सामोपधिं संश्रयन् ।
गुप्तामात्मकटारिकां तदुदरे गाढं निखाय स्वयं
देवानामपि मन्दिरेऽद्य सुतरां सद्यो विधास्ये भयम् ॥ ६४ ॥

इत्थं चेतसि चिन्तितं बत निजे म्लेच्छेन तेनं च्छलं
तद्विज्ञाय शिवः स एष सकलं सद्यस्तदीयं फलम् ।

तस्मै दातुमथोद्यतो युधि यथा वक्ष्यामि सर्वं तथा
मन्ये तद्यशसा सुधामधुकथा पीयूषवार्ता वृथा ॥ ६९ ॥

इत्यपुराणे सूर्यवंशे निवासकरकवीन्द्रपरमानन्दविरचितायामध्याय-
शतसंमितायां वैयासक्यां संहितायामफजलागमनं नाम
विंशोऽध्यायः ॥ २० ॥

## एकविंशोऽध्यायः ।

कवीन्द्र उवाच—

अथो मिथो दर्शनार्थं भृशमुद्यतयोस्तयोः । अप्यत्रस्त धियोस्तत्र निजनीतिसमेतयोः ॥ १ ॥
यथा दूतमुखेनैव नियमः समजायत । कथयामि तथा सर्वं शृणुत द्विजसत्तमाः ॥ २ ॥
विन्यस्यानीकमात्मीयं यथावस्थितमात्मना । एकेनाफजलेनैव प्रस्थेयं शस्त्रपाणिना ॥३॥
याप्ययानाधिरूढेन यातव्यं च पुरः पुनः । सन्तु तत्परिचर्यार्थं द्वित्रा एवानुजीविनः॥
तथैव स्वयमभ्येत्य प्रतापाद्रेरुपत्यकाम् । शिवं प्रतीक्षमाणेन स्थेयं तत्रैव संसदि ॥ ५ ॥
शिवेन च समभ्येत्य शस्त्रहस्तेन गौरवात् । आतिथ्यमतिथेस्तस्य विधातव्यं यथाविधि ॥
तिष्ठन्तु दंशिताः शूराः पृष्ठे दश दश स्थिराः । शरस्यान्तरमासाद्य रक्षणाय द्वयोरपि॥
मिलिताभ्यामुभाभ्यां च कर्तव्यं तत्र तद्ग्रहः । सर्वस्यापि हि लोकस्य भवेद्येन महान्महः॥
एवं विधाय नियमं विधाय च्छलमान्तरम् । दिदृक्षमाणावन्योन्यं तदानीं तौ व्यराजताम् ॥
ततः श्रुत्वा तमायान्तं प्रतापाद्रितलस्थलीम् । शिवराजो महाराजः सज्जमानो व्यराजत॥
विविधाभिर्विधाभिर्वै यथादिष्टं पुरोधसा। तथा नित्यवदभ्यर्च्य देवदेवं वृषध्वजम् ॥११॥
नित्यदानविधिं कृत्वा भुक्त्वा स्वल्पमनल्पधीः । सम्यगाचम्य च मुहुर्मुहुरम्बु शुचि स्वयम्॥
चिन्तयित्वा च तां देवीं तुलजां क्षणमात्मनि । विधाय चाऽऽत्मनो वेषं तदात्वोचितमात्मना॥
निजमप्रतिमं लोके विलोक्य मुकुरे मुखम् । उत्थाय चाऽऽसनात्सद्यः प्रणिपत्य पुरोहितम्॥
द्विजानन्यांश्च तैः सर्वैराशंसितशुभोदयः । दधिदूर्वाक्षतान्स्पृष्ट्वा दृष्ट्वा मार्तण्डमण्डलम् ॥
स्थितामभ्येत्य च पुरः सवत्सां स्वर्णसंयुताम् । वितीर्य सुरभिं सद्यः सगुणायाग्रजन्मने॥
उद्यताननुयानार्थमात्मीयाननुयायिनः । प्रतापिनः प्रतापाद्रेर्गुप्तये विनियुज्य च ॥१७॥
तमन्तःसच्छलं म्लेच्छमभ्येत्य स्थितमन्तिके। अभ्यगच्छदसौ हार्दादभ्यागतमिवाऽऽत्मनः॥
उष्णीषेणेव शुचिना व्यभादुत्तंसधारिणा। काश्मीरजपृषद्वर्षरञ्जितेनाऽऽङ्किकेन च ॥ १९॥
शिववर्मा भृशबलः संवृतः शिववर्मणा । तस्य वज्रशरीरस्य किं कार्यं तेन वर्मणा ॥
कृपाणं पाणिनैकेन बिभ्राणोऽन्येन पट्टिशम् । स नन्दकगदाहस्तः साक्षाद्धरिरुदैक्ष्यत ॥

अथ पर्वतपर्यन्तात्पञ्चाननमिवोद्गतम् द्रुतप्रत्यर्पितपदं संप्रसज्य ।रः स्थितम् ॥ २२ ॥
सृण्यग्रसुन्दरोदग्रन्यायतश्मश्रुभीषणम् धीरं धीरदृशं वीरं शिवं रिपुरुदैक्षत ॥ २३ ॥
शिवोऽपि तं पुरो वीक्ष्य वृषा वृत्रमिवाऽऽगतम् । स्मयमानः स्वयं तस्य दृशा दृशमयोजयत् ॥
विरुद्धास्थितिमुद्बुद्धं क्रुद्धः क्रुद्धमिवान्तकम् । स तं शाहसुतं वीरं विश्वासयितुमात्मनि ॥
स्वहस्तस्थायिनं खड्गमखण्डितगतिं खलः । स्वपार्श्ववर्तिपाणिस्थमकरोद्विधृतच्छलः ॥
ततः स्वरेण तारेण मृषादर्शितसौहृदः । प्रतिकूलेन विधिना हतः स तमवोचत ॥२७॥

अफजल उवाच—

अये मृषामृधोत्साहधारिन्स्वैरतरस्थिते । किं नीतिपथमुत्सृज्य भजस्यपथपान्थताम् ॥
येदिलं कुतुबं वाऽपि दिल्लीन्द्रं वा महौजसम् । न सेवसे न मनुषे तनुषे गर्वमात्मनि ॥
तदद्य दुर्विनीतं त्वां विनेतुमहमागतः । प्रयच्छ पर्वतानेतान्गृध्नुतां त्यज मां भज ॥३०॥
धृत्वाऽहं त्वां स्वहस्तेन नीत्वा विजयपत्तनम् । अल्लीशाहस्य च पुरो नामयित्वा शिरस्तव
प्रणिपत्य च विज्ञाप्य तं प्रतापिनमीश्वरम् दास्यामि वैभवं तुभ्यं भूयो भूयस्तरं नृप ॥
शाहराजात्मज शिशो विहाय स्वां विहस्तताम् स्पृश हस्तेन मे हस्तमेहि देह्यङ्कपालिकाम् ॥
एवमुक्त्वा स तद्ग्रीवां धृत्वा वामेन पाणिना । इतरेण च तत्कुक्षौ निचखान कटारिकाम् ॥
नियुद्धविच्छिन्नः सद्यस्तद्धस्तोन्मुक्तकंधरः । ध्वनिना धीरधीरेण प्रतिध्वानितकन्दरः ॥
प्रविशन्तीमात्मकुक्षिभागमभ्रान्तमानमः । किंचिदाकुञ्चिताङ्गस्तां शिवः स्वयमवञ्चयत् ॥
ददाम्येतं कृपाणं ते गृहाण निगृहाण माम् । इदं विनिगदन्नेव धीरः सिंहसमस्वरः ॥
सिंहयायी सिंहकायः सिंहदृक्सिंहकंधरः । स्वपाणिद्वितयोद्धूतविकोशायुधसुन्दरः ॥३८॥
तं निर्यातयितुं वैरं प्रवृत्तोऽसौ महाव्रतः । शिवः कृपाणिकाग्रेण कुक्षावेव तमस्पृशत् ॥३९॥
आपृष्ठं विद्विषत्कुक्षिं तूर्णं तेन प्रवेशिता । आकृष्यान्त्राणि सर्वाणि सा कृपाणी विनिर्गता
कुप्यतः कार्तिकेयस्य शक्तिः क्रौञ्चाचलं यथा । व्यभादफजलं भित्त्वा शिवखड्गलता तथा ॥
घूर्णमानेन शिरसा बभावफजलस्तदा । ईदृशं शिवराजेन पौरुषं दर्शितं यदा ॥ ४२ ॥
ततो रुधिरधाराभिरार्द्रीकृतमहीतलः । प्रमत्त इव मोहेन घूर्णमानोऽतिविह्वलः ॥ ४३ ॥
यथैव शिवशस्त्रेण निःसृतान्युदराद्बहिः । तथैवान्त्राणि सर्वाणि बिभ्राणः स्वेन पाणिना ॥
अनेन निहतोऽस्मीह जल्पन्नमहितं जवात् । इति वक्ति स तं यावत्तावत्तत्पार्श्ववर्तिना ॥
तमेवाफजलस्यासिं समुद्यम्याभिमानिना । जिघांसयैव सहसा शिवराजोऽभ्यपद्यत ॥४६॥
नो हनिष्यत्यमुं राजा द्विजातिमिति जानता । स्वामिनाऽफजलेनासौ योद्धा युद्धे निवेशितः
द्विजातिरिति तं श्रुत्वा जानानः शिवभूमिपः । अभ्येतमपि नो हन्तुमैच्छन्निजनयस्थितः ॥
अप्राप्ता एव यावत्ते तत्राफजलसैनिकाः । तावत्स एव तं खड्गं शिवस्योपर्यपातयत् ॥

शिवस्तत्पातितं खड्गं खड्गेनाऽऽदत्त वै तदा। शिरस्तदधिपस्यापि पट्टिशेन व्यधाद्द्विधा ॥
पट्टिशेन विनिर्भिन्नमुच्छ्रितस्य रिपोः शिरः। स्वरुणा विहतं सद्यो गिरेः शृङ्गमिवापतत् ॥
असौ जिष्णुरभूत्तत्र स म्लेच्छोऽभून्महीधरः। शितकोटिः पट्टिशोऽपि शतकोटिरभूत्तदा ॥
क्वचित्कबन्धः प्रसृतः स्रस्तान्यन्त्राणि च क्वचित्। न्यपतच्च क्वचिन्मूर्धा शिरोवेष्टोऽपि च क्वचित्
विप्रकीर्णं क्वचिच्छत्रं प्रकीर्णकमपि क्वचित्। तत्तन्मुक्तामणिमयो रत्नोत्तंसः स च क्वचित् ॥
क्वचिद्वस्त्रं क्वचिच्छस्त्रं समासाद्य दशामिमाम्। सोऽलुठन्मेदिनीपृष्ठे दुष्टः स्वेनैव कर्मणा ॥
निमिष्य नोन्मिषन्त्येव यावत्ते तस्य सैनिकाः। तावच्छिवनृपेणोच्चैर्यवनः स निपातितः ॥
ते हतं स्वामिनं वीक्ष्य यवनानीकनायकाः। कुप्यन्तोऽतीव दृप्यन्तो विनिर्धूतायतायुधाः
सय्यदोऽबदुलो नाम बडाह्वोऽपि च सय्यदः। रहीमखानोऽफजलभ्रातृपुत्रश्च दुर्मदः ॥
पहीलवानखानोऽपि महामानी महान्वयः। पीलुजिच्छंकरश्चोभौ वीरौ महितवंशजौ ॥
चत्वारोऽन्येऽपि यवनाः पवनातिगविक्रमाः। बलिनोऽफजलस्यैते पार्ष्णिग्राहाः प्रमाथिनः ॥
ध्वस्ते जम्भासुरे सद्यः सुरेश्वरमिवासुराः। संभूयाभ्यपतन्सर्वे शिवराजजिघांसवः ॥६१॥
तदा हेतिद्वयं तद्वै परिभ्रामयताऽमुना। परितो वितताकारः प्राकारः किमकारि न ॥
अभ्रमन्नपि युद्धेऽस्मिन् स भ्रमन्नभ्रमन्तरा। अभ्रामयदहोरात्रं मिषतां द्विषतां दृशः ॥
कालेन करवालेन पटुना पट्टिशेन च। ककुभां वलयानीव मण्डलानि व्यधत्त सः ॥६४॥
मण्डलानि वितन्वानं मन्वानं दर्पमात्मनि। पट्टिशं च कृपाणं च व्याधुन्वानं मुहुर्मुहुः ॥
तदा तमुग्रकर्माणं शिववर्माणमाहवे। न विलोकयितुं शेकुः परे स्वेऽपि च सैनिकाः ॥
क्षणं विशन्वसुमतीं क्षणमाकाशमाविशन्। मध्य एव क्षणं तिष्ठन्नोषमासीन्न स क्षणम् ॥
तडित्पातानिव रयादुपेतानात्मनोऽन्तिके। पातितान्प्रतिवीरैस्तैः खड्गपाताननेकशः ॥
कदाचित्पट्टिशेनैव कदाचिद्दृढमुष्टिना। कदाचिद्युगपत्ताभ्यां द्वाभ्यामादत्त स प्रभुः ॥६९॥
तदा संभः कावुकीयः काट्कश्चेङ्गालसंभवः। कुण्डजिच्च यशोजिच्च द्वाविमौ कङ्कवंशजौ
गोकपाटान्वयः कृष्णः शूरजित्काण्टकोऽपि च। तथैव माहिलो जीवो विश्वजिच्च मुरुम्बकः ॥
संभः करवरस्तद्वदिभरामोऽपि बर्बरः। एते दश महावीराः शिवराजाभिरक्षिणः ॥७२॥
कृतक्ष्वेडारवाः कोषनिष्कासितमहासयः। प्रत्यगृह्णन्त तांस्तत्र पवनानिव पर्वताः ॥७३॥
तेषां तेषां च नादेन पूरिते गगनोदरे। मन्दुरायां निरुद्धोऽपि विद्रुतोऽभूद्धरिर्हरेः ॥७४॥
राजन्ददाम्यहं तुभ्यमसिमेतं सहस्व मे। वदन्मुहुर्मुहुरिदं बडाह्वः सय्यदस्तदा ॥७५॥
नदन्तं सिंहवद्भूरि भूयोऽप्यफजलान्तिकम्। प्रत्यधावन्निषिद्धोऽपि माहिलेन तरस्विना ॥
अहमेव निहन्म्येनमायात्वेष ममान्तिके। इति क्षितिपतेर्वाक्यमनाकर्ण्यैव माहिलः ॥७७॥
तमसिं सय्यदोत्क्षिप्तं समादत्त स्ववर्ष्मणा। व्यधाच्च सय्यदं वीरः करवालेन वै द्विधा ॥

कावुकीयेन कङ्काभ्यामिङ्गालेनाभिमानिना । मरुम्बकेन वीरेण तथा करवरेण च ॥७९॥
क्रूरेण काण्टकेनापि गोकपाटेन च द्रुतम् । बर्बरेण च सावेशं युद्ध्यन्तोऽन्येऽपि पातिताः ॥
निकृत्तस्कन्धहस्तानि निकृत्तचरणानि च । निकृत्तमूर्धमध्यानि पतितानि समन्ततः ॥८१॥
लोहितेनानुलिप्तानि द्रुमामयसमश्रिया । तत्र तेषामहो तानि वपूंषि प्रचकाशिरे ॥८२॥
एकाशीत्यधिकैः पञ्च दशभिः संमितैः शतैः । शालिवाहे शके संवत्सरे चैव विकारिणि ॥
मासि मार्गे सिते पक्षे सप्तम्यां गुरुवासरे । मध्याह्ने दैवतद्वेषी शिवेनाफजलो हतः ॥८४॥

विध्वस्तेऽफजले बलिन्यपि बलेनैतेन भूमीभृता
वाति स्मातिहिमः प्रभूतकुसुमामोदी मृदुर्मारुतः ।
नद्यश्चापि सुधावदातसलिलाः सद्यः स्थिरा सुस्थिरा
स्वं स्वं स्थानमवाप्य निर्वृतहृदः सर्वेऽप्यभूवन्सुराः ॥ ८९ ॥

इति निजरिपुमुच्चैः संगरे पातयित्वा विलसति शिवभूमीवल्लभे शस्त्रपाणौ ।
सपदि विजयशंसी व्यश्नुवानस्त्रिलोकीं गिरिशिरसि गभीरो दुन्दुभिः प्रादुरासीत् ॥८६॥

इत्यनुपुराणे सूर्यवंशे निवासकवीन्द्रपरमानन्दविरचितायामध्यायशतसंमितायां वैयासक्यां संहितायामफजलवधो नामैकविंशोऽध्यायः ॥ २१ ॥

## द्वाविंशोऽध्यायः ।

कवीन्द्र उवाच—

तेन दुंदुभिनादेन दूतेनेव प्रसर्पता । सैनिकाः शिवराजस्य सपदि प्रतिबोधिताः ॥ १ ॥
मौलक्षिकः कमलजिद्यशोजित्कङ्क एव च । तानाजिन्मल्लसूरश्च कुण्डा वरखलस्तथा ॥
रामः पाङ्गारिकश्चामी पञ्च पञ्चाग्नितेजसः । एकैकेन सहस्रेण पत्तीनां परिवारिताः ॥
सहस्रैः पञ्चभिस्तद्वद्वृतो नारायणो द्विजः । क्षात्रेण कर्मणा ख्यातः सर्वेऽप्येते महायुधाः ॥
बह्वायुधीयगहनां गहनान्तरवर्तिनीम् । रयादवारयन्नेत्य परितः परवाहिनीम् ॥ ५ ॥
अत्रान्तरे परेऽप्युच्चैः पटहेन प्रणादिना । हतोऽफजल इत्येव सहसा प्रतिबोधिताः ॥
सज्जमानाः साभिमानान्संरब्धान्प्रतिरुन्धतः । तान्पत्तीन्पर्वतोपान्तादेतानैक्षन्त सर्वतः ॥
निर्मदा इव मातङ्गा निर्विषा इव पन्नगाः । निरुष्णीषा इव नरा निःशृङ्गा इव भूधराः ॥
निर्जीवना इव घनाः क्षितीशा इव निर्धनाः । विरेजिरे न यवनास्ते तदाऽफजलं विना ॥
तातस्याफजलस्यैतत् पतनं नभसो यथा । श्रुत्वा ध्वस्तधियस्तत्र मुमुहुस्तनयास्त्रयः ॥

नभस्वता प्रतीपेन भग्नपोता इवार्णवे । तदा ते जीवितस्याऽऽशामत्यजन् गहने वने ॥
अथ कृच्छ्रगतान्सर्वान्गतगर्वान्गतौजसः । सैन्यान्तर्वर्तिनः सैन्यान्वीक्ष्य विद्रवतो निजान् ॥
भक्तिमान् स्वामिनि मृधे शक्तिमानतिकोपनः । स्फुरदुद्घोणवदनः पृथुप्रसृतिलोचनः ॥
क्रूरः करिकराकारकरः प्रतिभयस्वरः । स्थिरीकृत्य मुसेखानः पठानः स्वयमब्रवीत् ॥

मुसेखान उवाच—

तृणीकृत्याऽऽत्मनः प्राणान्स्वामिकार्यचिकीर्षया । स गतोऽफजलस्तर्हि वयं सर्वेऽपि किं गताः
सर्वतः संवृतपथः पर्वतः क्व गमिष्यथ । आस्तिष्ठत प्रहरत प्रतीपान् परितः स्थितान् ॥
स्वामिनं वा सखायं वा सहायं वा स्वमुज्झताम् । केषांचिदपि विद्रुत्य जीवतां माऽस्तु जीवितम्
स्वामिकार्यमकुर्वाणः कुर्वाणस्त्राणमात्मनः । कथं दर्शयतु स्वीयं मुखमात्मजनान्तिके ॥
विकरालं महाकालं करवालं करे वहन् । प्रसह्य विद्विषा सेनामिमां पातायिताऽस्म्यहम् ॥
एवमुक्त्वा महाबाहुः समारुह्य महाहयम् । संवृतः स्वेन सैन्येन शिबिरान्निर्ययौ रयात् ॥
तमन्वियाय हसनः श्वसनप्रतिमो बली । अन्येऽपि सैन्यपतयः स्वस्वसैन्यसमान्विताः ॥
अन्तरा दन्तुरानेकप्रसृतप्रस्तराविलम् । तुरंगमुखराघातोत्पतदग्निकणाकुलम् ॥ २२ ॥
स्यदस्खलत्पदपतज्जङ्घालजनसंकुलम् । अभूत् प्रचलने तेषां प्रचलं तन्महीतलम् ॥२३॥
अथ प्रतिभटान्वीक्ष्य संरब्धैरश्वसादिभिः । अप्यश्मवर्त्मसु रयात् पुरो नुनुदिरे हयाः ॥
ततः पुरः प्रणुन्नाश्वो मुसेखानोऽत्यमर्षणः । तरस्वी प्रतिजग्राह पृषत्कैः परसैनिकान् ॥
हसनाद्यास्तथाऽन्येऽपि क्रुद्धाः सर्वे धनुर्भृतः । शरैराकुलयांचक्रुः पुरःस्थान्परिपन्थिनः ॥
तदा रोषारवैस्तेषां हयानां हेषितैरपि । बृंहितैश्च महेभाना युद्धावेशोपबृंहितैः ॥ २७॥
चण्डदण्डाहतानां च पटहाना पटुस्वनैः । विविधानां च वाद्यानां निनादैर्भृशभीषणैः ॥
तथाऽमितस्तरक्षूणामृक्षाणां वनपक्षिणाम् । शार्दूलानां वृकाणां च खड्गिनां वनदंष्ट्रिणाम् ॥
निर्गतानां दरीगर्भात् सद्यः क्षुभितचेतसाम् । कोलाहलैः सुबहुभिर्गगनोदरगामिभिः ॥
प्रसभं पूरिताऽत्युच्चैरटवी साऽतिसंकटा । प्रतिध्वानैः प्रतिभटानुद्भटान् बहुतर्जयत् ॥३१॥
शरैस्तीक्ष्णतरैर्विद्धा अप्यविन्धान्पदातयः । तस्मिन् रणे मण्डलाग्रैः क्षितिमण्डलमानयन् ॥
धावद्भिरसिधाराभिः शकलीकृतसैन्धवाः स्पर्धयेवाश्ववारास्तैः पत्तिभिः पत्तयः कृताः ॥
कश्चित् परप्रहरणप्रहतो रुधिरारुणः । पतन्ननूरुः सहसा सूर्यमण्डलमासदत् ॥ ३४ ॥
कश्चिद् भीमेन भिन्नोरुयुगमण्डलः । सद्यस्तु सुयोधनदशामन्वभूद्वसुधां श्रितः ॥ ३५ ॥
कश्चिन्नियुध्यतात्युच्चैर्द्विषता द्विदलीकृतः । वीरो विपर्यस्तवपुर्जरासंध इवापतत् ॥३६॥
गुलिकायन्त्रनिर्मुक्तगुलिकाविद्धवक्षसः । केचिद्धृतधनुर्जीवा अपि निर्जीवतां दधुः ॥३७॥

तत्तल्लाघवमास्थाय प्रहरन्वै प्रभाविणम् । खड्गखेटकभृत्कश्चिद्बभार बत गौरवम् ॥३८॥
परितः पातितोदग्रतरवारितडिल्लताः । प्रावेपयन्त यवनान्घनाः शिवपदातयः ॥ ३९ ॥
स्वमुखेन स्वयोधानां संमुखे यो व्यकत्थयत् । सोऽपि संख्ये मुसेखानः शूरैस्तैरभ्यभाव्यत ॥
अथ ध्वस्तहये स्रस्तशस्त्रे वित्रस्तचेतसि । अपक्रामति संग्रामान्मुसेखानेऽभिमानिनि ॥४१॥
सद्यो यापितवैयात्ये याकुतेऽप्यपयायिनि । अत्याहितेन हसने व्यसनेषु निमज्जति ॥४२॥
भयशङ्कुवशे क्षिप्रमङ्कुशे विगतौजसि । मृदुभ्यामपकोपाभ्यां पदाभ्यामपसर्पति ॥ ४३ ॥
कातरौ भ्रातरौ हित्वा ज्यायानफजलात्मजः । विहाय सेनां चाऽऽस्थाय रूपान्तरमपासरत् ॥
ततस्तद्येदिलानीकमपारमपनायकम् । पलायमानमभितः शिवसैन्यैर्न्यरुध्यत ॥ ४५ ॥
युध्यध्वं मां भृशबलं भ्रातरं शाहभूभुजः । मम्बो वदन्निदं तत्र बत बन्धादमुच्यत ॥४६॥
पौत्रः फरादखानस्य नाम्ना यो रणदूलहः । तेजसा तीव्रतीव्रेण सर्वेणापि सुदुःसहः ॥४७॥
साहसी शोणनयनः कोपी कोणपविक्रमः । युगदीर्घभुजो मानी घनसंहननो युवा ॥४८॥
स निजं प्रह्वयन्नेव शैलशृङ्गसमं शिरः । शिवसैन्यवशं यातो बत बन्धमुपाददे ॥ ४९ ॥
सभयोऽम्बरखानस्य तनयोऽम्बरनामकः । तदा विवर्णवदनो बत जीवितकामुकः ॥५०॥
विन्यस्तवर्मनिस्त्रिंशचर्मशक्तिशरासनः । शिवसैन्यवशं यातो बत बन्धमुपाददे ॥ ५१ ॥
मतङ्गजवदुन्मत्तो राजजिन्नाम घाण्टिकः । शिवसैन्यवशं यातो बत बन्धमुपाददे ॥५२॥
निजाग्रजपरित्यक्तौ यौ तावफजलात्मजौ । शिवसैन्यवशं यातौ बत बन्धमुपेयतुः ॥५३॥
अन्येऽपि येदिलानीकनायकाश्छिन्नसायकाः । सहस्रिणो द्विसाहस्रास्त्रिसाहस्राश्च भूरिशः ॥
पञ्चषट्सप्तसाहस्राः त्रिदशारिसमश्रियः । शिवसैन्यवशं याता बत बन्धमुपाययुः ॥५५॥
पातितैश्च पतद्भिश्च पात्यमानैः पलायितैः । तद्वीराशंसनं वीरैरगमद्दुर्गनीयताम् ॥ ५६ ॥
पाशैः प्रासैश्चन्द्रहासैः पट्टिशैश्च परश्वधैः । मुद्गरैः परिघैस्तद्वत्त्रिशूलैस्तोमरैरपि ॥ ५७ ॥
गदाभिः शक्तिभिश्चापि निषङ्गैरिपुपूरितैः । खेटकैश्चापि चक्रैश्च च्छुरिकाभिः कटारकैः ॥
तनुत्रैश्च शिरस्त्रैश्च स्वर्णसारसनैस्तथा । तलत्रैरङ्गुलित्रैश्च यन्त्रैराग्नेयसंज्ञिकैः ॥ ५९ ॥
आनकप्रमुखैर्वाद्यैः पताकाभिर्ध्वजैरपि । बिरुदैरातपत्रैश्च प्रकीर्णैश्च प्रकीर्णकैः ॥ ६० ॥
उल्लोचैः काण्डपटकैरनेकैः पटमण्डपैः । नैकवर्णैः सुविस्तीर्णैर्महार्हक्षौमजन्मभिः ॥ ६१ ॥
त्रिपदैः करकैः स्थालैश्चषकैश्च पतद्ग्रहैः । चतुष्कैर्मञ्चकैश्चापि रूप्यकाञ्चननिर्मितैः ॥६२॥
इतस्ततः परिस्रस्तैस्तैस्तैर्वस्त्रैश्च भूरिशः । अन्यैरपि महासैन्यसंभारैरभितः श्रिता ॥ ६३ ॥
विवृतास्यपरिस्पष्टदशनैः स्तब्धलोचनैः । शिरोभिर्विगतोष्णीषैरुग्रवेषवती क्वचित् ॥ ६४ ॥
आबाहुमूलात्पतितैर्धृतरत्नाङ्गुलीयकैः । क्वचित्प्रसाधिताङ्गीव कोमलाङ्गुलिभिः करैः ॥६५॥
स्थूलस्थूणोपमैर्मूलाच्छिन्नैरहहभिरूरुभिः । जानुजङ्घाप्रविभ्रष्टैरङ्घ्रिभिश्चोच्छ्रिता क्वचित् ॥

गृध्रैरुत्कृत्तमस्तिष्कग्रासग्रसनलम्पटैः । पटुचञ्चूपुटैः पक्षप्रच्छायितपथा क्वचित् ॥ ६७ ॥
आपतन्निजयूथ्योग्रत्रस्यत्क्रोष्टुकुलाकुला । क्षतजोत्क्षेपणक्रीडड्डाकिनीमण्डला क्वचित् ॥ ६८ ॥
दर्शितोदग्रदन्ताग्रनिकृत्तान्त्रवसामिषैः । स्रुतलोहितलिप्ताङ्गैः पिशाचैश्चाश्रिता क्वचित् ॥
हरहारविधिप्रीतयोगिनीयोगिनी क्वचित् । सा तदाऽधिगतार्थाऽभूज्जयवल्लीवनावनी ॥ ७० ॥

इति जितपरानीकास्ते ते पदातिबलाधिपाः
प्रमुदितहृदः सर्वे खर्वेतरस्मयसंगताः ।
सरभसमथो बद्ध्वानद्धा विरुद्धचमूपतीन्
पदि पदि पुरस्कुर्वन्तस्ताञ्छिवं समलोकयन् ॥ ७१ ॥
केचित्संयति पातिताः सकुतुकं केचिच्च विद्राविताः
संरब्धेन शिवेन ते प्रतिभटाः केचिच्च बन्दीकृताः ।
एतत्तत्र जगत्त्रयस्थितिपरे राजन्यलीलाधरे
दुष्टध्वंसकरे धराभयहरे चित्रं न विश्वंभरे ॥ ७२ ॥

इत्यनुपुराणे सूर्यवंशे निवासकरकवीन्द्रपरमानन्दविरचितायामध्याय-
शतसंमितायां वैयासक्यां संहितायामफजलसैन्यभङ्गो नाम
द्वाविंशोऽध्यायः ॥ २२ ॥

## त्रयोविंशोऽध्यायः ।

कवीन्द्र उवाच—

अथ तत्तच्छिरोवेष्टश्लिष्टदोर्द्वयपृष्ठकान् । उष्णक्लान्तान्निरुष्णीषान्नमद्ग्रीवान्विचेतसः ॥ १ ॥
विकृष्टान्सैनिकैः स्वीयैः परसेनापतीन्पुरः । पुञ्जीभूतान्प्रतापाद्रौ शिवराजो व्यलोकत ॥ २ ॥
ततोऽरिसैन्यादानीतान्सौवर्णान्राजतान्पणान् । मञ्जूषान्तरनिक्षिप्तान्रत्नराशीननेकशः ॥ ३ ॥
तथा मुक्तामयान्हारान्हेमभारांश्च भूरिशः । स कुबेरगृहाकारे कोषागारे न्यधापयत् ॥ ४ ॥

मनीषिण ऊचुः—

अल्लीशाहस्य तां सेनां सहितः पत्तिसेनया । जयवल्लीवनाम्भोधौ न्यमज्जयदयं शिवः ॥ ५ ॥
तावत्सेनापतिस्तस्य सहितः सप्तिसेनया । क नु स्थितो किमकरोत्कवीन्द्र तदुदीरय ॥ ६ ॥

कवीन्द्र उवाच—

बलादफजलं नाम दनुजं हन्तुमुद्यतः । प्रस्थितोऽमित्रविजयी जयवल्लीं यदा शिवः ॥ ७ ॥
तदा तदाज्ञया तूर्णं प्रस्थितः पृतनापतिः । द्विषां बबन्ध राष्ट्राणि बभञ्ज नगराणि च ॥
अस्मिन्नवसरे स्वामिकार्यैकनिहितात्मना । वैराटवर्तिना तेन यवनेनाभिमानिना ॥ ९ ॥

प्रहिताः स्वहिताः सैन्यपतयस्तीव्रविक्रमाः । उपचक्रमिरे शैवं राष्ट्रमाक्रमितुं क्रमात् ॥ १० ॥
यादवः शूर्पविषयं पाण्डरश्च शिरोवलम् । खराटः साहसवटं हिलालः पुण्यनोवृतम् ॥ ११ ॥
हपसः सैफखानश्च परसैनिकसंकटम् । प्रविश्य निग्रहेणैव जग्राह तलकोङ्कणम् ॥ १२ ॥
ततः शिवस्य सेनानीः श्रुत्वा तां देशदुःस्थताम् । कृतामायोधनपरैः परैरफजलाज्ञया ॥ १३ ॥
सहितः सप्तिभिः सप्तसाहस्रैः पत्तिभिस्तथा । संपरायपरः श्रीमान्स्वामिकार्याभियोगवान् ॥ १४ ॥
परावृत्य महाबाहुर्महाबाहुजिगीषया । प्रायात्पतगराड्रंहाः शिवराष्ट्रमनामयम् ॥ १५ ॥
खराटं पाण्डरं चाथ यादवं च सुदुर्जयम् । हिलालं सैफखानं च विधास्ये शमनातिथिम् ॥
सेनापतेरिमां संधां समाकर्ण्य शिवः स्वयम् । तस्मै निजेन दूतेन द्रुतमेतदवेदयत् ॥ १७ ॥
यवनोऽफजलो नाम दानवो दुरतिक्रमः । जयवल्लीमिमामेति ससैन्यः संधिकाम्यया ॥ १८ ॥
तस्मात्त्वया न योद्धव्यं तस्य तैः सैनिकैः समम् । संनद्धेनैव च स्थेयं यावत्संधिविनिर्णयः ॥
भवेदहन्यथो यस्मिन्मम तस्य च दर्शनम् । तस्मिन्नेवान्तिके कुर्यास्त्वं वैराटमसंशयम् ॥
इत्यादिष्टः स्पष्टमेव स परं शिवभूभृता । नायुध्यत परैः सार्धं मध्य एव व्यवस्थितः ॥ २१ ॥
अथ युद्धमभूद् यस्मिञ्छिवाफजलयोर्द्वयोः । वैराटमायया सैन्यपतिस्तस्योत्तरेऽहनि ॥ २२ ॥
तेन ते न धृतास्तेन विद्रुताः सर्वतोदिशम् । मुसेखानप्रभृतयो दुर्धर्षास्त्रिदशद्विषः ॥ २३ ॥

मनीषिण ऊचुः—

स आरोहः सोऽवरोहः स पन्थाः सा महावनी । स विरोधो स परिधिः सा निशा स पराभवः ॥
स वेषः स च संत्रासावेशः साऽप्यसहायता । जयवल्लीपरिसरादमी कथमपासरन् ॥ २५ ॥

कवीन्द्र उवाच—

पातितेऽफजले तस्मिञ्छिवेन शिवपत्तयः । पलायमानानभितो यवनान्पर्यवारयन् ॥ २६ ॥
मुसेखानश्च हसनो याकुतश्चाङ्कुशस्तथा । नासहन्त परं तत्र परैः कृतमतिक्रमम् ॥ २७ ॥
अपराह्णे महानासीत्तेषां तेषां च संगरः । प्रोत्पतन्निपतद्भ्रातिमहोत्पातभयंकरः ॥ २८ ॥
सा शैलभूमिः पत्तीनां हिता वै नाश्वसादिनाम् । यवनास्ते ततो भग्नाः संमग्नाः साध्वसार्णवे ॥
परस्परैकमनसः पालयन्तः परस्परम् । द्विषदभ्यागमधिया वीक्षमाणा दिशो दश ॥ ३० ॥
अतीवतुङ्गान्मातङ्गांस्तुरगान्सुमनोहरान् । अपारान्कोषसंभारान्परिवारान्प्रियानपि ॥ ३१ ॥
विहायापसृतास्तस्मात्समरादमरारयः । ताम्यन्तस्तामसधियस्ते तरूनन्तराऽन्तरा ॥ ३२ ॥
भ्रमन्तः कातरतराः परेषां दृग्गोचराः । कण्टकाविद्धसर्वाङ्गाः क्षतजार्द्राः क्षतौजसः ॥
शिलाशीर्णोरुपर्वाणो मार्गान्वेषणतत्पराः । पुरः प्रतापवर्माणं चन्द्रराजस्य बान्धवम् ॥ ३४ ॥
वित्रस्तं वञ्चितदृशं द्वित्रैरेव जनैर्वृतम् । द्राग् विद्रवन्तमद्राक्षुरक्षुद्राः क्षुद्रताजुषः ॥ ३५ ॥
अथाऽऽयुधभृतः सर्वे सद्यः क्षुभितमानसाः । निहन्तव्योऽयमित्युच्चैर्ब्रुवन्तस्ते तमब्रुवन् ॥

पुरा कर्णेजपीभूय पुनः पुनरुपेयुषा । मिथ्यानुलापिना नित्यं निजच्छद्मापलापिना ॥३७॥
त्वयैवाऽऽनीयाफजलः स महानीकनायकः । सहसा सहितोऽस्माभिः कालानलमुखे हुतः ॥
एवमुक्तवतस्तांस्तु हन्तुमुद्यमितायुधान् । स निबद्धाञ्जलिः क्रुद्धान् प्रणनाम पुनः पुनः ॥
मुसेखानस्ततस्तत्र दृष्ट्वा काकुरवाकुलम् । ऊचे करुणयैवैनं नीचीकृतनिजस्वरः ॥ ४० ॥

मुसेखान उवाच—

तव दृष्टचरैवेयमटवी गाढसंकटा । अतोऽस्मानग्रतो भूत्वा नय केनचिदध्वना ॥ ४१ ॥
वैराटं विषयं गत्वा वयं त्वामात्मदायिनम् । सौहृदादुपकर्तारः सखायमिव सुव्रतम् ॥४२॥
स इमां गिरमाकर्ण्य मुसेखानमुखोद्गताम् । तथेति संप्रतिश्रुत्य भृशविश्रब्धमानसः ॥४३॥
केनाप्यज्ञायमानेन दृष्टपूर्वेण वर्त्मना । द्राक्तान् निष्क्रामयामास शिवस्य विषयाद्बहिः ॥
तथाविधानुजत्यागाल्लज्जितोऽफजलात्मजः । विन्यस्तपूर्वान् वैराटे तातेनाश्वांश्च कुंजरान् ॥
संभारानवरोधांश्च कोषान् योधांश्च कांश्चन । आदाय दूयमानात्मा द्रुतमस्माद्विनिर्ययौ ॥
अनुद्रुत्यापि नाद्राक्षीद्यदा तान् द्रुतविद्रुतान् । तदा सेनापतिर्नेता पुनर्वैराटमागमत् ॥४७॥
शिवोऽपि विहितद्वेषादल्लीशाहात्सुदुर्मतेः । बली बलेन विषयं क्षिप्रमादातुमुद्यतः ॥ ४८ ॥
प्रस्थानभेरीभांकारभांकारितदिगन्तरः । प्रभावी बहुभिः सैन्यैर्वैराटं स्थानमासदत् ॥४९॥
अथ स्वेन प्रभावेण कृष्णातटमकण्टकम् । कृतं व्यलोकत मुदा मोदितो मुदितैर्द्विजैः ॥
ततोऽग्रयायिनं कृत्वा स तं सेनापतिं निजम् । अन्यमाक्रमितुं देशममुपाक्रमत विक्रमी॥५१॥
ततस्तु तस्य सैन्यानि परसैन्येन पालितौ । पर्यमण्डलयञ्छैलावुभौ चन्दनवन्दनौ ॥५२॥
स नृपः श्रीपतिः साक्षाददद्राक्षीदालयं श्रियः । श्र्यालयं नाम नगरं नामनिर्वासिताहितः ॥
ततोऽफजलविध्वंसादवसन्नावनाश्रयौ । भृशं भृशबलानीकैः पुण्यदेशादपासितौ ॥ ५४ ॥
उभौ नायकनामानौ राजानौ यादवान्वितौ । खेलकर्णकीतपुत्रं हिलालं विश्रुतं क्षितौ ॥५५॥
पुरस्कृत्याभयं प्राप्य प्रपद्य च महाशयम् । न्यषेवेतां विशेषेण शिवतातिममुं शिवम् ॥५६॥
उपायनान्युपानीय नमतस्तान्महाभुजान् । आत्मनीनतया श्रीमाञ्छिवः श्रीभिः समार्धयत् ॥
अथ खट्वाङ्गकं मायावनीं रामपुरं पुनः । कलधौतं बालवं च तथा हलजयन्तिकाम् ॥
अष्टिं चाष्टं वटग्रामं वेलापुरमुदुम्बरम् । मसूरं करहाटं च शूर्पं ताम्रं च पलिकाम् ॥५९॥
नेरलं कामनगरीं विश्रामपुरमप्युत । सवाहमूरणं कोलं करवीरपुरं तथा ॥ ६० ॥
बलैराक्रम्य स बली बलीनादाय भूरिशः । प्रयच्छन्नभयं वीरो न्यदधान्निजशासने ॥६१॥
ततो न्यस्य यथान्यासं परितः स्वां पताकिनीम् । सहसा स महीपालः प्रणालं शैलमावृणोत्
परिमण्डलितं वीक्ष्य शैलं शैलाधिवासिनः । क्षिप्रं वप्रमुपाश्लिष्य जगर्जुर्जलदा इव॥६३॥
ते शस्त्रवर्षैः सोत्कर्षैः पृथुवर्ष्मभिरश्मभिः । परानवाकिरन्नुग्रतरैरुल्काशरैरपि ॥ ६४ ॥

भूमानमागतैर्धूमैर्नालायन्त्राननोद्गतैः । नभोऽन्त(न्ध)कारितमभूद् भृशमम्भोधरैरिव ॥६५॥

आग्नेययन्त्रोदरनिःसृतानां नवोदितार्कप्रभविग्रहाणाम् ।
कदम्बकैरायसकन्दुकानां कुतूहलान्यादित संगरश्रीः ॥ ६६ ॥

तडित्समानाः सुतरां रणन्तः प्रोत्क्षिप्यमाणाः शिवसैनिकौघैः ।
उल्काशरास्तत्र तथा निपेतुः परे यथा चेतसि नो चिचेतुः ॥ ६७ ॥

अथाऽऽयुधीयाः शिवभूमिपीयास्तं शैलमध्यारुरुहुर्बलेन ।
निषिध्यमाना अपि तैः समस्तैर्द्विषद्भिरुद्धूनितहेतिहस्तैः ॥ ६८ ॥

उत्पत्य तत्राऽऽपततां समन्तात् तार्क्ष्यक्रमाणां शिवसैनिकानाम् ।
क्रूरैः कृपाणैर्निशितैश्च बाणैः प्राणैर्व्ययुज्यन्त बत प्रतीपाः ॥ ६९ ॥

शरैः शिवानीकचरप्रयुक्तैर्निपेतुषा शैलजुषा जनेन ।
मन्येऽधमर्णप्रतिमेन भर्त्रे प्रत्यर्पितोऽभूदशितो धनौघः ॥ ७० ॥

सह्यस्य भर्ता द्विषतामसह्यस्तेभ्यो गृहीतं सपदि प्रसह्य ।
अध्यास्य विन्ध्याचलतुल्यकायं प्रभुः प्रणालाचलमैक्षतायम् ॥ ७१ ॥

दर्पादेत्य प्रणालाचलशिरसि शिवः सैनिकैरात्मनीनै-
र्न्यस्यंस्तस्मिन्ननीकं दिनमिव निखिलां यामिनीं तामतीत्य ।
प्राकारागारवापीविलसदुपवनापारकासारगुर्वीं
दृष्टां दृष्टां मुहुस्तां श्रियमतुलतरां पार्वतीयामपश्यत् ॥ ७२ ॥

इत्यनुपुराणे सूर्यवंशे निवासकरकवीन्द्रपरमानन्दविरचितायामध्या-
यशतसंमितायां वैयासक्यां संहितायां प्रणालाद्रिग्रहो
नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

## चतुर्विंशोऽध्यायः ।

मनीषिण ऊचुः—

ते तदाऽऽयोधनात्तस्मान्निधनाभावकाङ्क्षया । सहसा विमुखीभूता मुसेखानपुरोगमाः ॥
हीनाः स्वीयेन सैन्येन ह्रीणाश्चाफजलं विना । किमकुर्वत किं मत्वा गत्वा विजयपत्तनम् ॥
निशम्याफजलस्यान्तं प्रणालाद्रिग्रहं तथा । स्वयं पुनः किमकरोद्येदिलो भृशबालिशः ॥
तं च शैलं समादाय बलादफजलान्तकः । स विश्वविजयी वीरश्चरितं किंविधं व्यधात् ॥

कवीन्द्र उवाच—

मुसेखानः फाजिलेन याकुतेनाङ्कुशेन च । हसनेन च संभूय निजेनाभिजनेन च ॥ ५ ॥
विजयाह्वं पुरं गत्वा नत्वा स्वामिनमात्मनः । प्रह्वग्रीवः पुरोवर्ती बद्धाञ्जलिपुटोऽभवत् ॥

येदिलस्तमथोद्वीक्ष्य विषीदन्तमधोमुखम् । जगाद गर्वगर्भाभिर्गीर्भिरुत्साहयन् भृशम् ॥
येदिल उवाच—
सहसा साहसात्स्वामिकार्यव्ययितजीवितः । स यातस्तां दशां तर्हि न यातः शोचनीयताम् ॥
कृतहस्तः स्वयं तत्र कुमृतिप्रकृतिः परः । तमेकाकिनमाहूय हतवान्विजने वने ॥ ९ ॥
यद्ययास्यत्तदा तत्र सेनामादाय भूयसीम् । असावफजलस्तर्हि नायास्यत्तादृशीं दशाम् ॥
न हि साहसमात्रेण सिद्धिमायान्त्युपक्रमाः । अलं फलाय महते सनयाः किल विक्रमाः ॥
विपिनेऽफजलं तत्र यो हन्त हतवान् रुषा । आशीविष इवोच्छीर्षगतो नोपेक्ष्य एव सः ॥
अविषह्यतमं तस्मात्तमागस्करमात्मनः । शल्यतुल्यं सह्यशैलादुद्धरिष्यामि सर्वथा ॥१३॥
बत प्रस्थाय वैराटमास्थितः सोऽपि संप्रति । सद्यः समुह्य सैन्यानि प्रणालाद्रिमुपैष्यति ॥
निगदन्ति प्रणिधयः किंवदन्तीमिमामिह । तस्मात्सर्वेऽप्यभिक्रम्य कुरुध्वमतिविक्रमम् ॥
तत्तद्देशजुषस्तांस्तानानाय्यार्नाकनायकान् । परनिग्रहणायोच्चैर्जागरूकानिव ग्रहान् ॥
साहाय्याय समुन्नद्धान्संदोह्यान्यांश्च सैनिकान् । अहर्दिवमविश्रान्ताः प्रयात पतगा इव ॥
फरादमूनुभूनुर्हि नाम्ना यो रुस्तुमेजनः । स पृथुप्रधनश्लाघी पृतनापतिरस्तु नः ॥ १८ ॥
इत्युक्तास्तेन सर्वेऽपि सत्कृताश्च यथोचितम् । तमात्मनः परिवृढं प्रणिपत्य प्रभाविणम् ॥
ते सैन्यपतयस्तस्मात्पुराद्विजयसाह्वयात् । कृतक्ष्वेडारवोदग्राः समग्रा अपि निर्ययुः॥२०॥
अथ संप्रेषितचराश्चरास्ते येदिलान्तिके । तमुदन्तं प्रणालाद्रेर्द्रुतमेत्य न्यवेदयन् ॥ २१ ॥
निशम्य येदिलस्तेन नरेन्द्रेण करे कृतम् । अन्वशोचत्तमचलं फणी फणमिवोन्नतम् ॥२२॥
तमद्रिमद्रिपतिना शिवेन स्ववशीकृतम् । अल्लीशाहोऽन्वहं चित्ते चिन्तयन्पर्यतप्यत ॥२३॥
अथाऽऽत्मानमपर्याप्तं म वानस्तद्विनिग्रहे । द्रुतमानाययामास दिल्लीपतिपताकिनीम् ॥२४॥
शिवराजोऽपि ताञ्श्रुत्वा घनसंनाहशालिनः । परसैन्यपतीन्भूयः संपरायाभिलाषिणः ॥२५॥
नियुज्य पृतनामुग्रां प्रणालाचलपालने । स्वयमुत्साहवानुच्चैरुत्सुकस्तज्जिगीषया ॥ २६ ॥
स्फुरद्धेतिशतोदग्रदवाग्निसमविभ्रमैः । सैन्यैः समन्वितस्तैस्तैः पुरस्तात्तरसाऽभवत् ॥२७॥
परेऽपि रुस्तुमं नाम पृतनाधिपतिं निजम् । सुदुर्धरं पुरस्कृत्य साभिमानाः पुरोऽभवन् ॥
अथ वीक्ष्य सुदुर्धर्षां परवीरपताकिनीम् । रुस्तमः फाजिलादीन्स्वान्यूथनाथानवोचत ॥२९॥
रुस्तुम उवाच—
पश्यत प्रसभं व्यूढां प्रतिपक्षचमूमिमाम् । संनाहिनीं महोत्साहां धीरामुल्लसितध्वजाम् ॥
सन्त्यस्यां हि महावीराः सीरायुधसमश्रियः । प्रत्यात्मान इवानेके शिवस्यातुलतेजसः ॥
स एष शिवसेनानीर्नेता नाम प्रतापवान् । योत्स्यते भृशमस्माभिरभिमानभृतां वरः॥३२॥
तथा यादवराजोऽपि व्यूढकङ्कटको युवा । प्रभूतकटकः क्रुध्यन्नस्मानभिबुभूषति ॥३३॥
खराटः खर्वितारातिबलः प्रबलसाहसः । सूनुना हनुमन्नाम्ना सहितोऽस्माञ्जिगीषति ॥
पाण्डवप्रतिमो युद्धे पाण्डरः पाण्डरध्वजः । बलस्य महतो भर्ता कर्ता समरमद्भुतम् ॥३५॥
करवालकरः कालः कालज्वलनभीषणः । करिष्यति हिलालोऽपि भृशं भृशबलिप्रियम् ॥

महसां राशिरिङ्गालो हीरवर्मा महाभुजः । तथा व्याघ्रो भीमनामा प्रवारः सिद्धजित्तथा ॥
गोदो नाम महावीरो जगत्स्थापकवंशजः । तथा परशुरामोऽपि महाद्रिककुलोद्भवः॥३८॥
अपरेऽपि महानीकनाथाः प्रधनपारगाः । शिवराजस्याभिसराः प्रसरन्ति पुरः पुरः ॥३९॥
स्वयं भृशबलो राजा शिवोऽपि रिपुराजहा । अमरप्रतिमः कामं समरं पारयिष्यति ॥४०॥
तदद्धाऽस्माकमप्येते यूथनाथाः समन्ततः । संव्युह्य वाहिनीं स्वां स्वां तिष्ठन्तु मृधमूर्धनि॥
पालयिष्याम्यहं मध्यभागमद्धा महायुधाः । सव्यं पार्श्वमनीकस्थः फाजिलोऽवतु विक्रमी ॥
मलीक इतबाराह्वः सादातेन समन्वितः । पालयत्वपरं पार्श्वं पृतनायाः पृथुस्मयः ॥ ४३ ॥
अजीजखानतनयः फतेखानो महायशाः । तथा मुल्लाहयाह्वोऽस्तु पार्ष्णिग्राहक्रियापरः ॥
सन्ताभिधो घोरफटः सर्जराजश्च घाण्टिकः । संनद्धाः सैनिकाश्चान्ये पालयन्त्वभितश्चमूम् ॥
इत्युक्तास्तेन ते सर्वे यथास्थानमवस्थिताः । पालयामासुरव्यग्राः समग्रामपि वाहिनीम् ॥
तदानीमेव भूपालः शिवोऽपि निजवाहिनीम् । व्यूहयन्नभितो योधानवोचदुचितं वचः ॥
नेता फाजिलमभ्येतु चतुरङ्गचमूपतिः । प्रयातु पर ीरघ्नो व्याघ्रो मुल्लाहयाह्वयम् ॥ ४८ ॥
मलीकमितबाराख्यमिङ्गालोऽप्यभिसर्पतु । महाद्रिको महामानी फतेखानेन युध्यतु ॥४९॥
प्रवारवंश्यः सिद्धोऽपि सादाताभिमुखोऽञ्चतु । गोदस्तु घाण्टिकं घोरफटं च प्रतियास्यति ॥
अहं तु रुस्तुमं नाम यवनानीकनायकम् । सादयिष्यामि समरे शूरं नासीरवर्तिनम् ॥५१॥
दक्षिणेन च सैन्यस्य खराटः पाण्डरोऽपि च । हिलालो यादवश्चोभावितरेणाभिगच्छताम् ॥
इत्युक्तवति राजेन्द्रे तद्योधास्ते महायुधाः । समं दुन्दुभिनादेन सिंहनादान्वितेनिरे ॥५३॥
ततो भूरिप्रभेदानां दुन्दुभीनामनेकशः । क्रकचानां काहलानां पणवानां च सर्वशः ॥५४॥
गोमुखानां च शृङ्गाणामनीकद्वयवर्तिनाम् । निध्वानः पुष्कराध्वानमावृणोद्दीर्णदिङ्मुखः ॥
अग्रतः प्रचलन्तीनां पताकानां समन्ततः । कान्तिभिः सकलं व्योम तदा किर्मीरतां दधौ ॥
ते ततोऽत्यर्थमुद्वेले स्वनन्त्यौ भृशभीषणे । पूर्वापरार्णवनिभे पृतने समसज्जताम् ॥ ५७ ॥

आवेशादथ भुजदम्भहस्तचित्तैरभ्यर्णागतपृतनाद्वयाग्रयोधैः ।
गर्जद्भिः सकुतुकसंप्रणोदिताश्वैर्धाराभिः समरधराऽभिषिच्यते स्म ॥ ५८ ॥
आधावत्तुरगखुरोत्थरेणुधारासंभाराकुलितमिहान्तरेऽन्तरिक्षम् ।
संप्राप्ते घनसमये वहन्नवाम्भः संपृक्तं सर इव धूसरं बभूव ॥ ५९ ॥
तं वृष्टेः समयमुदीक्ष्य दीर्घसारैरासारैर्नवजलदैरिव प्रकामम् ।
धावद्भिः सपदि धनुर्धरैरनेकैर्बाणौघैर्गगनतलं बताप्यधायि ॥ ६० ॥
यावत्स्वं रिपुमवलोक्य लब्धहर्षः कोदण्डं किल युधि कश्चिदाचकर्ष ।
तावत्तत्करधृतभल्लभिन्नहस्तस्तच्चित्रं यदजनि तत्र नो विहस्तः ॥ ६१ ॥
संग्रामाङ्गणभुवि भूरिकीर्तिपुष्पाण्यादातुं सपदि धनुर्लतां विकृष्य ।
ते शूराः करकलया शिलीमुखानां संदोहं द्रुतमुदपातयन् परेषु ॥ ६२ ॥

अभ्येतप्रतिभटचण्डचन्द्रहासप्रौढिम्ना द्रुतमपमूर्धतां प्रपद्य ।
श्लिष्यद्भिः क्षितिमपि बद्धमुष्टिभावान्नोन्मुक्ताः क्वचन पताकिभिः पताकाः ॥६३॥
आगच्छन् गुरुतरगर्वमर्ववाहैः संसृज्य द्रुतकृतसंगरावगाहैः ।
संरम्भादभिजगृहेऽग्रगैरनेकैः सैन्यौघैः स्वयमथ रुस्तुमः शिवेन ॥६४ ॥
कर्षन्तः सपदि धनूंषि सप्रकर्षं युध्यन्तः शिवसुभटाः शरैरमोघैः ।
क्रुद्धानामभिपततां महायुधानां म्लेच्छानामदयमपातयञ्छिरांसि ॥ ६५ ॥
सोल्लासं भृशबलसैन्यपातितानां दम्भोलिप्रकृतिभृता बताऽऽयुधानाम् ।
संघातं कथमपि सेहिरे न तस्मिन् संमर्दे सुमहति रुस्तुमायुधीयाः ॥ ६६ ॥
तिष्ठन्तं करकटिकदम्बदुर्गदेशे गर्जन्तं घनमिव फाजिलं तदोच्चैः ।
आक्रामन् मरुदिव सर्वतो बलीयानुद्भ्रान्तं शिवपृतनापतिर्व्यधत्त ॥ ६७ ॥
नेतारं भृशबलभूपवाहिनीनां नेतारं कुपितमुदीक्ष्य फाजिलोऽद्धा ।
उच्चैरुच्चरितपदां पपाठ नान्दीं प्रारम्भे द्रुतमपयानरूपकस्य ॥ ६८ ॥
रत्नाढ्याभरणविभूषिता युवानः संग्रामाङ्गणभुवि लोहिताङ्गरागाः ।
अन्येभ्यो भयमपहाय केऽपि वीरश्रीयुक्ताः शरशयनेषु शेरते स्म ॥ ६९ ॥
संग्रामे महति खराटकेन केचिद्घोद्धारः सपदि च पाण्डरेण केचित् ।
विध्वस्ताः स्वयमथ यादवेन केचिद्व्यग्रेण स्वयमभिपत्य चापि केचित् ॥ ७० ॥
सोत्साहं प्रधनपरो महोग्रकर्मा विक्रम्यामृणदहितान्स हीरवर्मा ।
क्रोधाग्निप्रसमरधूमधूम्रधामा कांश्चित्तानथ हतवान्हिलालनामा ॥ ७१ ॥
स्वं शस्त्रं विजहति रुस्तुमे वियाते संग्रामात् सपदि फाजिलेऽपयाते ।
सादातप्रमुखमनीकमव्यवस्थं त्रातारं कमपि निजस्य नाध्यगच्छत् ॥ ७२ ॥
अथ समरसदेशात्पश्चपैरश्ववारैरपसरति विहस्ते रुस्तुमे भङ्गभाजि ।
भृशमशरणमलीशाहसैन्यं समस्तं व्यधित दशदिगन्तप्रेक्षणायासमाशु ॥ ७३ ॥
तदनु शिवनृपस्तं प्राप्तभङ्गं पुरस्तात्प्रसभमपसरन्तं रुस्तुमं त्रस्तमुच्चैः ।
निकटगमपि नैव न्यग्रहीन्निग्रहार्हं न हि विदधति भीरौ शूरतां सूर्यवंश्याः॥७४॥

येऽस्मानप्यपहाय हन्त समरे सद्योऽपयाताः स्वयं
भूयोऽप्याश्रयितुं त्रपाविरहिताल्लँज्जामहे तान् वयम् ।
मन्वानाः सुतरामितीव हृदये ते येदिलानीकिनी—
मत्तेभाः सबलं शिवं भृशबलं भेजुः शरण्यं प्रभुम् ॥ ७५ ॥

सोत्साहोत्सवशिवसंहृतप्रतीपप्रस्रस्ताभरणगणप्रभानुभावैः ॥
कर्षन्ती सकुतुकलोकलोचनौघं सौभाग्यं किमपि बभार सा मृधश्रीः ॥ ७६ ॥
प्रयत्नप्रोन्मज्जत्तुरगशतविज्ञातहृदयां गभीरं गर्जन्तीमतिभयतरामुद्धततराम् ॥

प्रवाहप्रौढिम्ना सपदि परिपूर्णोभयतटां कबन्धानां श्रेणी कथमथ ततराश्रसरितम् ॥७७॥

इत्थं स रुस्तुममुखान्विमुखान्विधाय देशं च तं नरपतिः स्वकरे निधाय ।
ढक्कारवेण मधुरेण दिगङ्गनानामुल्लासयन्नुदलसद्वदनाम्बुजानि ॥ ७८ ॥

इत्यनुपुराणे सूर्यवंशे निवासकरकवीन्द्रपरमानन्दविरचितायाम-
मध्यायशतसंमितायां वैयासक्यां संहितायां रुस्तुमादि-
भङ्गो नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

---

## पञ्चविंशोऽध्यायः ।

कवीन्द्र उवाच—

रुस्तुमादीन्विनिर्जित्य वितत्य च सितं यशः । शिवोऽल्लीशाहविषयं वशमानेतुमञ्जसा ॥
संप्रेष्य महतीं सेनां सेनापतिसमन्विताम् । स्वयं पुनः प्रणालाद्रिमवेक्षितुमुपागमत् ॥२॥
सोऽपि सेनापतिर्नेता शिवराजनियोजितः । येदिलस्याऽऽशु तद्राष्ट्रं वशी चक्रे महायशाः ॥
कपित्थं बदरग्रामं मल्लग्रामं च कुण्डलम् । गोहग्रामं सतीकीरमेडं च मिरजं तथा ॥४॥
गोकाकं दुग्धवाटं च पुरं मुरवटं पुनः । धारावटं महादुर्गं क्षुद्रवन्द्यपुरं तथा ॥ ५ ॥
श्यामग्रामं मायिलं च पारग्रामं च संगलम् । काणदं कर्दमवटं कागलं हविलं तथा ॥
हनुवल्लीं हूणवटं रायबाकं हुकेरिकाम् । काण्डग्रामं हरिद्रां च ग्रुणिकां किणिकामपि ॥
अरगं तिलसङ्गं च केरूरं चाम्बुपं पुनः । कामलापुरसंयुक्तामतनीं च त्रिकूटकम् ॥ ८ ॥
एतान्यन्यानि च महापत्तनानि पुराणि च । निगृह्य निग्रहाभिज्ञो निन्ये नेता स्वनिघ्नताम्
इति ध्वस्ते जनपदे त्रस्ते सैन्येऽपि भूयसि । पराधीनत्वमाप्तेषु प्रणालाद्रि(दि)षु त्र्यद्रिषु
चिरयत्सु च ताम्रेषु द्रुतमाकारितेष्वपि । विदूयमानोऽनुदिनं पतन्नत्याहिताम्बुधौ॥११॥
अल्ली कर्णपुराधीशं जोहरं नाम बर्बरम् । आहूय प्राहिणोत्तूर्णं निग्रहीतुं शिवं नृपम् ॥
स ततोऽनेकसाहस्रैरश्ववारैः सजातिभिः । अपारैः पर्वताकारैः करिभिश्च समन्वितः ॥
तथा कार्णाटकैः पत्तिबलैरतिबलैर्बली । पालितं शिवभूपेन प्रणालाचलमागमत् ॥ १४ ॥
रुस्तुमः फाजिलश्चैव भग्नपूर्वावुभावपि । येदिलस्याऽऽज्ञया भूयः संभूय निजसेनया ॥
समानगुणशीलेन सादातेन समन्वितौ । द्रुताग्रगामिना तेन जोहरेण समीयतुः ॥ १६ ॥
बाजराजो घोरफटः कार्णाटः पीडनायकः । वल्लीखानात्मजो भायीखानः समरदुर्जयः ॥
मसूदो बर्बरोऽन्येऽपि येदिलस्य नियोगतः । प्रणालमद्रिमादातुं जोहरान्तिकमाययुः ॥
ततः स जोहरस्तद्वत्फाजिलश्चापि रुस्तुमः । अमी स्वैः स्वैरश्ववारैः सहिताः संगरोद्धुराः ॥

बडेखानादिभिः पत्तिसेनाधिपतिभिर्वृताः । पूर्वदिग्भागमध्यास्य तं न्यरुन्धन्महीधरम् ॥
सादातश्च मसूदश्च बाजराजश्च बाहुजः । मायीखानादयोऽन्येऽपि स्वैः स्वैः सैन्यैः पुरस्कृताः
तथा कार्णाटयाष्टीकैः स्फुरत्फलकयष्टिकैः । अन्यैश्च गुलिकायन्त्रधरैरुत्पतनोद्धतैः ॥२२॥
पदातिभिः परिवृतः प्रभावी पीडनायकः । प्रणालाचलमावव्रुः प्रतीचीं दिशमाश्रिताः ॥
अन्यान्यपि च सैन्यानि तस्याद्रेर्दक्षिणोत्तरौ । तस्थौ भागावुपाश्रित्य संश्लिष्टं जोहराज्ञया
शैलवर्ती शिवोऽस्त्युच्चैरातिनीचैश्च जोहरः । आहवः स तदप्यासीद्धारताहवसोदरः ॥२५॥
बर्बरः स बहून्मासान्युयुधे तेन भूभृता । तथाऽपि न यशो लेभे प्रतिवेलं पराहतः ॥२६॥
एवं वदन्तमनघं कवीन्द्रं विप्रपुंगवम् । श्रीगोविन्दपदाम्भोजप्रमोदभरमेदुरम् ॥ २७ ॥
शिवभूपयशःसोमसमुल्लासितचेतसम् । पर्यपृच्छन्निति मुदा बुधाः काशीनिवासिनः ॥ २८ ॥

मनीषिण ऊचुः—

अल्ली दिल्लीपतेः सेनां विधृतायोधनस्मयाम् । विसृज्य दूतमात्मीयं द्रुतमाह्वयति स्म याम् ॥
सा पुनः कियती केन नायकेनाभिरक्षिता । केनाध्वना क्व चाऽऽयाता किं कार्यं चान्वपद्यत ॥
कं प्रतीकारमकरोच्छिवराजश्च तां प्रति । परमानन्द सुमते तत्सर्वमभिधीयताम् ॥३१॥

कवीन्द्र उवाच—

शिवस्योपचयं वीक्ष्य तथाऽपचयमात्मनः । याचितां येदिलेनोच्चैः साहाय्यमभिवाञ्छता ॥
दिल्लीपतिः स्वपृतनां पृथुसारां प्रथीयसीम् । बलिना मातुलेनाद्धा शास्ताखानेन रक्षिताम् ॥
प्रपन्नपालनपरः शतशो जितसंगरः । प्रयातुमादिशत्तूर्णं धारागिरितलस्थिताम् ॥ ३४ ॥
ततोऽनेकेऽनीकनाथाः स्वामिशासनवर्तिनः । प्रतस्थिरे सुसंनद्धाः शास्ताखानपुरोगमाः ॥
मानी शमसखानाख्यः पटा(ठा)नः प्रथितक्रमः । सुतो जाफरखानस्य नामदारश्च दुर्जयः ॥
तथा गयासुदीखानो मुनीमो हसनोऽपि च । मिरजासुलतानश्च प्रतापी मनचेहरः ॥३७॥
तथा तुरुकताजश्च क्रूरात्मा च कुबाहतः । हौदखानोऽप्युजबखास्त्रयोऽमी समरोन्मुखाः ॥
इमामबिरुदीखानो लोदीखानश्च दुर्धरः । पठानौ द्वाविमौ तद्वन्मौलदौ द्वौ दिलावरौ ॥३९॥
तथाऽबदुलबेगश्च भड्गडः खोजडम्बरः । जोहरश्च पुनः खोजसुलतानः पराक्रमी ॥ ४० ॥
सिदीफतेफतेजङ्गौ रणरङ्गविशारदौ । क्रोधनः कारतलवो गाजीखानादयोऽपि च ॥४१॥
तनयः शत्रुशल्यस्य भावसिंहः प्रभावभृत् । किशोरशामसिंहाह्वौ राजानौ चास्य बान्धवौ
राजा गिरिधरो नाम तथैव च मनोहरः । प्रद्युम्नश्चानिरुद्धश्च पञ्चमः पुरुषोत्तमः ॥४३॥
गोवर्धनेन सहिताः षडमी गौडवंशजाः । क्षत्रियाः क्षपितारातिकुलाः क्षितिभृतां वराः ॥
गौडविठ्ठलदासस्य नप्ता सप्ताश्वसंनिभः । सुतोऽर्जुनस्य विजयी राजसिंहश्च पार्थिवः ॥

वीरो वीरमदेवश्च रामसिंहश्च सुव्रतः । तथैव रायसिंहश्च त्रयोऽमी शीर्षदान्वयाः ॥४६॥
श्रीमानमरसिंहाख्यो राजा चन्द्रवतान्वयः । तथा चन्द्रपुरेन्द्रस्य सेनापतिररिंदमः ॥४७॥
द्वारकाजिच्च जीवाजित्पर्शुजिद्विठ्ठलजित्पुनः । शरीफनृपसूनुश्च त्र्यम्बकः समरोन्मुखः ॥४८॥
एते भृशबलाः प्रौढबलाः सर्वे प्रतापिनः । गोकपाटश्च सुरजिद्यशोजिच्च महाभुजः ॥४९॥
राजा दिनकरश्चापि ख्यातः काङ्कटकान्वयः । त्र्यम्बकानन्तदत्ताख्यास्त्रयः खण्डार्गलान्वयाः
दत्तरुस्तुमवर्माणौ राजानौ यादवान्वयौ । सर्वजित्तनयो रम्भः प्रवारः परवीरहा ॥५१॥
जायामुदयरामस्य जगज्जीवनमातरम् । राजव्याघ्रीति यां प्राहुर्युधि व्याघ्रीमिवोध्दुराम् ॥
सा प्रतापेन महता बताप्रतिहतायुधा । कृष्णराजप्रचण्डाद्यैः सहिताऽऽत्मसनाभिभिः ॥
घाण्टिकः सर्जेराजश्च गाढः कमल एव च । कोकाटो जसवन्तश्च कमलेन समन्वितः ॥
दिल्लीपतेर्नियोगेन सर्वे एते महाभुजाः । स्वस्वसैन्यान्विताः शास्ताखानं सेनान्यमन्वयुः ॥
तैर्बलैः परितोऽप्यध्वसरितो विहितास्तथा । विना घनागमं नैताः पश्यन्त्यात्मपतिं यथा
निर्धार्य स ततः शास्ताखानः शास्ता चमूभृताम् । सहस्त्रैः सप्तसप्तत्या तुरगैः परिवारितः
गम्भीरवेदिभिर्भद्रकरिभिर्गिरिसंनिभैः । तथा बकसरैरग्रसरैः पत्तिवरैर्वृतः ॥ ५८ ॥
संनद्धः सहितस्तैस्तैर्विविधैर्युद्धसाधनैः । प्रपेदे सरितं भीमां सीमां विद्वेषिनीवृतः ॥
प्रोच्छिन्नदेवायतनं छिन्नभिन्नमठीमठम् । भज्यमानाध्यक्षगृहं भग्नोद्यानमहीरुहम् ॥ ६० ॥
प्रभूतविजनीभूतप्रतनग्रामपत्तनम् । पर्यटन्म्लेच्छकटकस्पष्टभ्रष्टसरित्तटम् ॥ ६१ ॥
ग्रस्तं विधुंतुदेनेव निखिलं विधुमण्डलम् । दर्शनीयेतरमभूत्तदा तन्मेदिनीतलम् ॥ ६२ ॥
ततः क्षिप्रमुपेतेन क्षुभिताम्भोधिबन्धुना । तेन चक्रेण चकितं चक्रे चक्रावतीतलम् ॥
रुरुधुस्तां शोणमुखाः पुरीं चक्रावतीं रुषा । शिवराजे महाराजे प्रणालाचलवर्तिनि ॥
तत्र संग्रामदुर्गान्तर्वर्तिभिः शिवपत्तिभिः । युयुधुर्युद्धकुशलास्ते दिनानि बहून्यपि ॥

यावद्युध्यति जोहरेण बलिना क्रुद्धः प्रणालाचले
राजा तावदमी वयं समुदिताश्चक्रावतीमण्डले ।
योत्स्यामः प्रतियोधिभिः प्रतिपदं दुर्गस्थितानामिदं
विज्ञायाभिमतं तथा न विदधे शास्ताऽपि शस्तं मनः ॥ ६६ ॥

अल्लीशाहोऽपि दिल्लीपरिवृढपृतनां तत्र संग्रामदुर्गे
युध्यन्तीमाकलय्य प्रथितपृथुबलां किंचिदाश्वस्तचित्तः ।

रोद्धव्योऽयं विरुद्धः प्रसभमवहितीभूय शैले प्रणाले
संरम्भादित्थमुच्चैर्विजयपुरगतो जोहरायाऽऽलिलेख ॥ ६७ ॥

इत्यनुपुराणे सूर्यवंशे निवासकरकवीन्द्रपरमानन्दविरचितायामध्यायशतसंमितायां वैयासक्यां संहितायां शास्ताखानाम्यागमो नाम पञ्चविंशोऽध्यायः ॥ २५ ॥

---

## षड्विंशोऽध्यायः ।

कवीन्द्रःउवाच—

अथ त्रस्ते जनपदे विस्त्रस्ते च महाजने । लुण्ठिते साहसवटे शूर्पे चाप्यवगुण्ठिते ॥१॥
निगृहीते पुण्यपुरे गृहीते चेन्दिरापुरे । परचक्रचयग्रस्तप्रायचक्रावतीचये ॥ २ ॥
आत्मजे शिवराजे च प्रणालाचलवर्तिनि । ऋद्धेऽपि जोहरेणोच्चैः क्रुद्धे तत्रैव युध्यति ॥
सुता यादवराजस्य शाहपत्नी महाव्रता । अहो रणरसोत्साहादाहोपुरुषिकामधात् ॥४॥
जननी शिवराजस्य सा राजगिरिवर्तिनी । निजानां गिरिदुर्गाणामवनेऽवहिताऽभवत् ॥
अथ सेनापतिर्नेता नैकानीकनिषेवितः । प्लुष्ट्वा शाहपुरं सर्वं दृष्ट्वा पृष्ठं च विद्विषः ॥ ६ ॥
शिवसंदेशमासाद्य प्रसादमिव सुव्रतः । समन्वितो हिलालेन शिवपत्तनमाययौ ॥ ७ ॥
ततः स वत्सलां वत्सालोकने चिरमुत्सुकाम् । यातुं प्रणालमचलं स्वयमेव समुद्यताम् ॥
रोषावेशवतीं स्वेन सैन्येन महताऽऽवृताम् । ददर्श शाहराजस्य राज्ञीं राजगिरिस्थिताम् ॥
आगस्कर इवात्यर्थं भीतभीतः पदे पदे । स ननाम हिलालेन सहितस्तां महाव्रताम् ॥
प्रणमन्ताविमौ दृष्ट्वा बद्धाञ्जलिपुटावुभौ । सा जगाद महाभागा मृदुगम्भीरभाषिणी ॥१०॥

राजमातोवाच—

बिभ्राणः समरोत्साहं मत्प्राणः स बहिश्चरः । रुद्धो विरुद्धैरभितः प्रणालाचलमूर्धनि ॥
तत्र तं स्वामिनं हित्वा त्रपां चातिमहीयसीम् । अहो युवां परभिया परावृत्तावुभावपि ॥
तमेकमात्मनो वत्सं विमोचयितुमात्मना । प्रयतिष्ये हरिष्येऽद्य जोहरस्य शिरो युधि ॥
वन्यामिव दिशं शून्यामिमां पश्यामि यं विना । आनयिष्यामि तं सद्यः शिशुं सिंहमिवोद्धतम्
श्रीवत्सलाञ्छनस्यांशं तमेकं वत्समात्मनः । क्षणं यदि न पश्यामि तर्हि त्यक्ष्यामि जीवितम्
युध्यध्वमिह संभूय यूयमत्र परैः सह । स्वयं योत्स्यामि तेनाहं जोहरेण विरोधिना ॥
एवमुक्तवतीं तत्र तां परित्रस्तचेतनः । क्षुभितां चारुचरितां चमूपतिरवोचत ॥ १८ ॥

चमूपतिरुवाच--

भगवत्याः प्रभावेण महाप्राणो महाभुजः । सोऽवेक्षते जगत्कृत्स्नं न सहायमपेक्षते ॥
अतस्तदाज्ञया गत्वा जित्वा विजयपत्तनम् । परावृत्तोऽस्मि भव्यं ते योध्दुं ताम्रमुखैः समम् ॥
पातुमायातु मामत्रभवती भव्यनिश्चया । तत्र वर्वर्ति विजयी शिवः स भृशनिर्भयः ॥
तमात्मनः परिवृढं दुर्धराणां धुरंधरम् । कदा द्रक्ष्यामि च कदा परैः स्रक्ष्यामि संगरम् ॥
योत्स्यन्ति ताम्रवदनैरनेके सैनिका इमे । अहं तु तत्र योत्स्यामि विरुद्धैर्जोहरादिभिः ॥
पालितान्यतियत्नेन शिवसैन्यैरिहाधुना । प्रभवत्यद्य दुर्गाणि गृहीतुं नारुणाननः ॥
इति विज्ञापयामास तत्र तां पृतनापतिः । प्रतस्थे च प्रतापेन प्रणालमचलं प्रति ॥
तरसा तुरगारूढं करवालकरं दृढम् । षड्विधान्यपि सैन्यानि तं महान्वयमन्वयुः ॥
शुण्डिशुण्डासमुध्दूतधूलिधूसरितध्वजम् । स बाहुजो महाबाहुस्तदुवाह महद्बलम् ॥२७॥
निशम्य जोहरोऽप्येनां रिपुसेनामुपागताम् । तेन सेनाधिपतिना हिलालेन च पालिताम् ॥
प्रतियोधयितुं योधानात्मनीनाननेकशः । तत्र संप्रेषयामास प्रासपट्टिशधारिणः ॥२९॥
ततस्ते बर्बराः सर्वे गर्वेण महताऽऽवृताः । प्रासपाशधनुर्बाणधारिणः प्रौढिकारिणः ॥३०॥
तामिमां पर्वतपतेः पृतनां सुप्रथीयसीम् । ऋद्धां रुद्ध्वाऽध्वनोर्मध्ये प्रत्ययुध्यन्नुदायुधाः ॥
तत्र युद्धान्यजायन्त हिलालस्य परैः सह । शरोत्कृत्तशिरस्कानि कुन्तकृत्तकराणि च ॥
वाहवाहो महाबाहुर्हिलालस्याऽऽत्मजस्तदा । विवेश विद्विषां व्यूहं मन्युमानभिमानवान् ॥
स युवा पृथुताम्राक्षो वैरिवक्षोविदारणः । अतीव दर्शनीयोऽभूद्दर्शयन्हस्तलाघवम् ॥३४॥
स ततस्तैर्महायोधैर्विविधायुधयोधिभिः । हयान्निपातितो मानी मुमोह मृधमूर्धनि ॥३५॥
तं भिन्नभल्लवपुषं भृशविह्वलचेतसम् । क्षिपन्तोऽतीव हृष्यन्तो निन्युः स्वशिबिरं प्रति ॥
तमात्मानमिवाऽऽत्मीयं नीयमानमरातिभिः । न शशाक हिलालोऽपि विमोचयितुमात्मजम् ॥
जोहरायुधिकास्तत्र क्रुधा युयुधिरे तथा । हिलालप्रमुखाः सर्वे विमुखाः सर्वतो यथा ॥
तमुदन्तमथाऽऽकर्ण्य पृष्ठगोपश्चमूपतिः । हिलालतनयं वीरमन्वशोचत चेतसि ॥ ३९ ॥
इति नेतृप्रभृतयो युध्यन्तोऽपि दिने दिने । प्रणालमचलं गन्तुमन्तरं न प्रपेदिरे ॥ ४० ॥
निशम्य शिवभूपालश्चमूपालपराभवम् । चुक्रोध जोहरायैव जम्भायेवाऽऽशु जम्भजित् ॥
स एकदा नृपस्तत्र शयानः सुखसद्मनि । प्रयतः प्रैक्षत स्वप्ने तुलजां वरदायिनीम् ॥
महासत्त्वं महासत्त्वा प्रणमन्तमथाग्रतः । तमेनमवनीपालं जगाद जगदीश्वरी ॥ ४३ ॥

तुलजोवाच--

एत्य ताम्राननैस्तत्र पुरी चक्रावती जिता । अतस्त्वयाऽत्र न स्थेयं प्रस्थेयं पुत्र सर्वथा ॥

सिद्धिवक्त्रेऽद्य ताम्राणां लग्ना चक्रावती तथा । गरीयसेऽपकाराय तिमीनां बडिशं यथा ॥
अरं राजगिरिं याहि पाहि राज्यं निजं नृप । ताम्यति त्वां विना तत्र जरती जननी तव ॥
सैन्यैः कतिपयैरेव प्रयातव्यमितस्त्वया । जोहरं योधयिष्यन्ति त्वद्योधाः पर्वताश्रयाः ॥
अहं तु निजयोगेन मोहयिष्यामि जोहरम् । प्रथयिष्यामि भुवने भवद्भुजयशोभरम् ॥
गतायुरेष पापात्मा न चिरायुर्भविष्यति । निमित्तान्तरमाश्रित्य मृत्युरेनं जिघृक्षति ॥
एवमादिश्य तं देवी तत्रैवान्तरधीयत । स तु प्रबुद्धस्तामेव पुनः पुनरनीनमत् ॥ ५०॥
ततः प्रत्यर्थिसैन्येन परितः कृतमण्डलात् । घनाघनघटालोकलीलाशालिशिखावलात् ॥
समन्ततस्तमःश्यामतमकाननसंकुलात् । जननीलीमिलत्पङ्कपिच्छिलोपत्यकातलात् ॥५२॥
गम्भीरगद्गदनदान्निःसरन्नैकनिर्झरात् । प्रणालादचलादात्मबलान्निर्यातुमुद्यतः ॥ ५३ ॥
प्रौढां पताकिनीं तत्र निधित्सुः शिवभूमिपः । पर्याम्नातगुणं लोके नाम्ना त्र्यम्बकभास्करम् ॥
निर्धार्थमग्रजन्मानमवधार्य धिया स्वया । गर्हिताहितसंदोहामर्हितां गिरमभ्यधात् ॥५५॥

राजोवाच—

पश्य युध्यद्भिरेवाहर्दिवमुद्यमितायुधैः । मासाश्चैत्रादयोऽस्माभिरिह नीताः प्रभाविभिः ॥
पञ्चमोऽयं तु संप्राप्तो नभाः श्यामनभाः शुभः । शोभां सुमहतीं तन्वन्निह काननसंकुले ॥
हन्ताहार्यशिरस्यस्मिन्नहिताहार्यपौरुषैः । हतो न जोहरोऽस्माभिरहो शैलतलस्थितः ॥
मग्नाः सेनाधिपतयो नेतृप्रभृतयः किल । नैनं परिधिमेतेषामीषत्क्षपयितुं क्षमाः ॥५९॥
बलशाली बर्बरोऽयं सुबाहुर्बहुभिर्बलैः । अशक्यो जेतुमस्माभिरिदानीमिति मे मतिः ॥
इहैव निग्रहायास्य चिरस्य मदवस्थितिः । न स्थाने पुण्यविषयस्थाने ताम्रावृते सति ॥
महती ताम्रवदनध्वजिनी साहसप्रिया । तत्र मन्ये मदन्येन न पराभूतिमेष्यति ॥६२॥
अतोऽस्मि प्रस्थितस्तूर्णं ताम्राननजिघांसया । परैरधर्षणीणोऽस्तु पर्वतोऽयं त्वदाश्रयः ॥
त्वमत्र भव सेनानीः सेनानीर्भ( रि )व विक्रमी । उज्जासनाय परितः परिवेषकृतां द्विषाम् ॥
भित्त्वैनं विद्विषद्व्यूहं पार्थस्येव प्रयास्यतः । प्रतियोद्धा न मे कश्चित्पतितोऽद्धा भविष्यति ॥
इत्युदीर्य स तं धीरं धरे तस्मिन्निधाय च । यामिन्याः प्रथमे यामे प्रस्थितः पृथिवीपतिः ॥
याप्ययानसमासीनं तमेनं स्वामिनं भुवः । तदा बतानुयान्ति स्म पदगानां शतानि षट् ॥
प्रस्थानदुन्दुभिस्तस्य दध्वान मधुरं तथा । ध्वनदम्भोधरभ्रान्त्या परैर्न बुबुधे यथा ॥६८॥
कदम्बकेतकीकुन्दकुटजामोदमेदुरः । परिस्फुरन्निर्झराम्भःकणसंपर्कमन्थरः ॥ ६९ ॥
तस्यानुकूलतां तत्र दधानः पवनस्तदा । आत्मीयं दर्शयामास साहाय्यं स्वजनो यथा ॥७०॥
व्रजते भूभृतेऽमुष्मै चरदृष्टचरे पथि । स्थलीं निम्नोन्नतां सद्यः सौदामिन्योऽप्यदर्शयन् ॥
अपि यान्तमदूरेण पथा तमवनीश्वरम् । नाज्ञासिषुर्विद्विषतो भवत्या विमोहिताः ॥ ७२ ॥

ततोऽतरान्तरास्त्रस्तप्रस्तरप्रोन्नतानतम् । प्रपातपातनिनदन्नदीनदसुदुर्गमम् ॥ ७३ ॥
नीलैशवलसंश्लिष्टसक्थिदघ्ननिषद्वरम् । नैकधातुद्रवमिलन्मृदुमृन्मसृणोदरम् ॥ ७४ ॥
पल्लवप्रोल्लसद्वीरुत्परिरब्धमहीरुहम् । वर्षाकुलितशार्दूलकुलसंकुलकंदरम् ॥ ७५ ॥
वामलूरान्तरोद्गच्छद्दन्दशूकजिघांसया । कृतकोलाहलं कोपात्प्रचलद्भिः कपालिभिः ॥७६॥
अदृष्टजनसंचारं चरदृष्टचरं तदा । राजा राजगिरेरीशस्तमध्वानमलङ्घत ॥ ७७ ॥

अथ धरणिमणिर्विशालशैलं निजमधिरुह्य विलोकनीयशीलम् ॥
वसातिमभिमतां विलङ्घिताध्वा स्वकटकविश्रमहेतुकामकार्षीत् ॥ ७८ ॥

इत्यनुपुराणे सूर्यवंशे निवासकरकवीन्द्रपरमानन्दविरचितायामध्याय-
शतसंमितायां वैयासक्यां संहितायां स्वराष्ट्रावेक्षणं नाम
षड्विंशोऽध्यायः ॥ २६ ॥

## सप्तविंशोऽध्यायः ।

मनीषिण ऊचुः—

प्रणालभूधरादात्मनिहितानीकदुर्ग्रहात् । समं पत्तिशतैः षड्भिस्तमज्ञातविनिर्गतम् ॥ १ ॥
जोहरः कथमज्ञासीन्मोहितो योगमायया । प्रतीकारं च कं चक्रे स्वेन चक्रेण संवृतः ॥
शिववीरयशःक्षीरनिधिप्लावितचेतसा । परमानन्द भवता तत्सर्वमभिधीयताम् ॥ ३ ॥

कवीन्द्र उवाच—

शिवः स्वयं प्रणालाद्रेर्यियासुरभवद्यदा । वीराय जोहरायेमं संदेशं व्यसृजत्तदा ॥ ४ ॥

शिवराज उवाच —

येदिलेन समाहूतैस्ताम्रैः स विषयो मम । उपक्रान्तस्त्वाक्रमितुमतिक्रान्तिविकारिभिः ॥५॥
अतस्तैरधुना योद्धुमितः प्रस्थीयते मया । योद्धव्यं बत मे योधैर्युद्धविद्भिरिह त्वया ॥
यदि वाऽस्ति मतिस्तेऽद्य द्वंद्वयुद्धे सकौतुका । तर्ह्यलंक्रियतामेत्य प्रणालाद्रेरुपत्यकाम् ॥
स्वेन स्वेन ह्यनीकेन विदूरादवलोकितौ । योत्स्यावः सोत्सवं तत्र बत निस्त्रिंशधारिणौ ॥
तमाकर्ण्यापि संदेशं कृती कर्णपुराधिपः । अनाकर्णितवच्चक्रे चाकितेन स्वचेतसा ॥ ९॥
तदाप्रभृति तेनोच्चैर्भायीखानादयो भटाः । संदिष्टाः सर्वतस्तस्य पर्वतस्य निरोधने॥ १०॥
अज्ञाता नैव निर्याति न चाऽऽयाति पिपीलिका । तथोपविविशुस्तत्र ततो जोहरसैनिकाः ॥
अन्धीकृत्येव तांस्तत्र निविष्टान्प्रतियोधिनः । शिवः स्वीयेन शौर्येण परिधिं तमलङ्घयत् ॥
स ततः सप्तभिर्यामैः पञ्चभिर्योजनैर्मितम् । अतीत्य किल पन्थानं विशालं शैलमासदत् ॥
अथोदन्तविदश्चाराः शाहराजात्मजं नृपम् । विनिर्गतं प्रणालाद्रेर्जोहाराय न्यवेदयन् ॥
संवर्तसागरावर्तवर्तीव स ततः स्वयम् । तान्तभावमधात्तत्रा भ्रान्तभ्रान्तः सभान्तरे ॥

अहो रुद्धो विरुद्धोऽयमस्माभिरिह भूधरे। अस्मान्विस्मापयन्नस्मादकस्मादद्य निर्गतः ॥
अथ येदिलशाहाय दर्शयिष्ये कथं मुखम् । अतःप्रभृति मे जन्म परिहासाय केवलम् ॥
यवनान्तकरं ह्येनं मम हस्ताद्विनिःसृतम्। निशम्य किं वदिष्यन्ति शास्ताखानादयोऽपि माम्
अनुतप्येति स चिरं विचिन्त्य च मुहुर्मुहुः। जगाद दुर्मदं वीरं मसूदं नाम बर्बरम्॥ १९॥

जोहर उवाच—

ग्रन्थिस्थेनेव रत्नेन सपत्नेनाधुनाऽमुना। निरोधपरिमुक्तेन बत मे दूयते मनः॥ २०॥
पश्यतां नः समस्तानां हस्ताद्योऽद्य विनिःसृतः। द्रुतमेव महाबाहो मसूद तमनुद्रव ॥
निजकार्यान्तरव्यग्रो विशाले च शिलोच्चये। स चिरं बत न स्थाता त्वमतस्त्वरितो भव॥
स तेनेति विनिर्दिष्टो विशिष्टः शौर्यकर्मणि। महत्या सेनया सार्धमनुदुद्राव तं द्विषम् ॥
आजानु तुरगास्तस्य ममज्जुः पथि पङ्किले। निपेतुः पत्तयश्चापि सान्द्रशैवालसंकुले ॥
मसूदमागतं श्रुत्वा शिवराजः पराक्रमी। सज्जे संगरायोच्चैर्वसंस्तत्र चिलोच्चये ॥२५॥
पल्लीवनपतिवीरो जसवन्तो नराधिपः। प्रतापी सूर्यराजश्च शृङ्गारपुरपार्थिवः॥ २६॥
अपरेऽपि च सामन्ताः शैलस्यास्य निरोधने। नियोजितचरास्तेन जोहरेण दुरात्मना ॥
युध्यमाना अपि मुहुः शिवं शैलाधिरोहिणम्। निषेद्धुं न क्षमन्ते स्म पराभूताः पदे पदे॥
ते सर्वेऽपि मसूदेन ससैन्येनाभिमानिना। समेत्य भूधरममुं भूयो रुरुधुरुद्धताः॥ २९॥
अथ ते शिवराजस्य योधाः क्रोधारुणेक्षणाः। अवरुह्य गिरेस्तस्मान्निःस्वनन्तो घना इव ॥
धावमानाः सावधानान्रुन्धानानभियायिनः। शिताभिरसिधाराभिः कृतोत्पातमघातयन् ॥
बहवो बर्बरास्तत्र बलिभिः शिवपत्तिभिः। खण्डिताः खड्गधाराभिर्ययुः संयमिनीं पुरीम्॥
जसवन्तः सूर्यराजः सामन्ताश्चापि भूरिशः। रयं धारयितुं तेषां न तत्र प्रभवोऽभवन् ॥
मसूदस्त्वपयान्तीं तां परावर्त्याऽऽत्मवाहिनीम्। वेगवान्प्रतिजग्राह परान्ग्रह इव ग्रहान् ॥
अथोभयेषां सैन्यानां संनिपातो महानभूत्। असिभिः शक्तिभिश्चोच्चैर्निघ्नतामितरेतरम् ॥
ततो भुजमदावेशान्निघ्नान्विघ्नानिवाऽऽगतान्। बर्बरान्पातयामासुः परे प्रधनपारगाः॥ ३६॥
तरूनिव तडित्वन्तो गुरुत्मन्त इवोरगान्। जगर्जुस्तान्विनिर्जित्य शैलाधिपतिपत्तयः॥३७॥
परितः शीर्णशीर्षण्यं शीर्णपाण्यङ्घ्रिमस्तकम्। शीर्णस्कन्धोरुयुगलं तदाऽभूद्रणमण्डलम्॥
सा शादहरिताऽप्युच्चैर्विशालाद्रेरुपत्यका। लोहितैः प्रतिवीराणामभूत्सपदि लोहिता॥३९॥
ऊरुभिर्जानुभिश्चापि तथा जङ्घाभिरङ्घ्रिभिः। शिरोभिश्च नराश्वानां दुष्प्रेक्ष्या वसुधाऽभवत्॥
इत्थं मसूदः स्वं सैन्यं शिवरोपमहार्णवे। समस्तमात्महस्तेन मज्जयित्वा विलज्जितः॥४१॥
परैः प्रधनपारीणैर्जीवन्मुक्तोऽनपेक्षितः। पराचीनोऽभवत्तेभ्यः परं निर्वेदमागतः॥ ४२ ॥
प्रपलाय्यं रणात्तस्मात्पुरस्तादात्मनः स्थितम्। जोहरस्तमथामंस्त परलोकादिवाऽऽगतम् ॥
अथ स्वविषयोपान्तादानायितचरां चमूम्। ममादाय विशालाद्रेहात्पर्वतात्प्रस्थितः स्वयम् ॥

उषित्वा वसतीस्तास्ताः सोत्सवे पथि पञ्चषाः । सद्यो राजगिरिं गत्वा राजा राजगिरीश्वरः ॥
चञ्चन्मरीचिनिचयस्फुरद्रत्नासनस्थिताम् । कुलस्त्रीभिः परिवृतां कुलस्त्रीकुलदेवताम् ॥४६॥
तत्तद्व्रतवतीं नक्तंदिवमञ्चितदेवताम् । ददतीमाशिषस्तास्ताः सत्यगम्भीरभाषिताम् ॥४७॥
प्रमोदबाष्पप्रचयस्तिमितायतलोचनाम् । समुच्चलितवात्सल्यरसां संदर्शनोत्सुकाम् ॥४८॥
संप्रस्नुतस्तनस्तन्यधाराभिरमृतात्मभिः । स्नपयन्तीं महाबाहुर्जननीं स्वामवन्दत ॥ ४९ ॥
ततस्तदन्तिके तत्तद्वृत्तमावेदयन्नयम् । अनयत्तद्दिनं सर्वं विजयी शाहनन्दनः ॥ ५० ॥
आगतो विजयी राजा निजं राजगिरिं यदा । प्राणदन्मृदुगम्भीरस्वनं दुन्दुभयस्तदा ॥५१॥

तत्रस्थं परिभूय बर्बरबलं सद्यः स्वबाहोर्बला-
दायाते शिवपत्तनं शिवमहीपाले प्रणालाचलात् ।
सेनाभिः सकलाभिरेव सहितस्तत्तत्प्रयत्नाकुलः
स्वेऽभीष्टे किल संशयालुरभवद्दिल्लीपतेर्मातुलः ॥ ५२ ॥

इत्यनुपुराणे सूर्यवंशे निवासकरकवीन्द्रपरमानन्दविरचितायामध्यायश-
तसंमितायां वैयासक्यां संहितायां स्वपुरप्रवेशो
नाम सप्तविंशोऽध्यायः ॥ २७ ॥

## अष्टाविंशोऽध्यायः ।

मनीषिण ऊचुः—
तस्मिन्भृशबलोत्तंसे राज्ञि राजगिरिं गते । गतिः काऽभूत्प्रणालाद्रेस्तदाचक्ष्व महामते ॥
कवीन्द्र उवाच—
शास्ताखानः स्वयं ह्यत्र विषये तत्र जोहरः । उभयत्रापि युद्धाय प्रभवामः कथं वयम् ॥
तदद्य येदिलाधीनः प्रणालाद्रिर्विधीयताम् । प्रस्थीयतां च भवता कार्यान्तरमिह स्थितम् ॥
अल्लीशाहात्प्रतिनिधिं तस्य शैलस्य सर्वथा । आदास्यामः क्षणेनैव नास्मद्वचनमन्यथा ॥
निजदूतमुखेनेत्थं शिवेन प्रतिबोधितः । परिचिन्त्य निजे चित्ते स्वयं त्र्यम्बकभास्करः ॥
संगराभिनिविष्टोऽपि प्रभोराज्ञां प्रमाणयन् । अल्लीशाहाय तं शैलं विततार विनीतवत् ॥
ततः स जोहरं दृष्ट्वा तस्मै पृष्ट्वाऽप्यनामयम् । सुतरां सत्कृतस्तेन शिवसौहृदकाङ्क्षया ॥
बहुना स्वसहायेन सैन्येन परितो वृतः । उपेत्य प्रणमन्मौलिः प्रभुं निजमुदैक्षत ॥ ८ ॥
मनीषिण ऊचुः—
नायं त्वया निहन्तव्यो मन्तव्यो मन्त्र एष मे । निमित्तमन्यदेवास्य जोहरस्य विनाशने ॥
भगवत्या समागत्य शिवराजाय धीमते । उक्तपूर्वमिदं ह्यासीत्प्रणालाचलवर्तिने ॥ १० ॥
तर्हि येन निमित्तेन यथा स निधनं गतः । तथा कथय नः सर्वं कवीन्द्र कुशलो ह्यसि ॥
वयं भागीरथीतीरे भवतो भारतीमिमाम् । पायं पायं न तृप्यामः सुधां सुमनसो यथा ॥

कवीन्द्र उवाच—

भगवत्या समादिष्टे शिवभूपे महाभुजे। ध्वजिनीं ताम्रवक्त्राणां पराभवितुमात्मना ॥१३॥
बलिनं बर्बरव्यूहं सद्यो भित्त्वा विनिर्गते। शिलोच्चये प्रणाले च दैवाद्धस्तमुपागते ॥१४॥
अलीशाहोऽतिमन्दात्मा मन्यमानोऽन्यथाऽऽत्मनि। चिराय जोहरायैव चुकोप किल कोपनः॥
ततो भूरि धनं लब्ध्वा बत लुब्धात्मना त्वया। कुमते ज्ञायमानोऽपि स प्रस्थास्यन्नुपेक्षितः
भवता प्रतिरुद्धस्य भवतोऽनुमतिं विना। दुर्गमो निर्गमस्तस्य नृपतेरिति मे मनः॥१७॥
तस्मादेहि धनं देहि यद्दत्तं तेन भूभृता। मद्धस्तेनैव भवतो भवेन्निधनमन्यथा ॥ १८ ॥
वर्णदूतमिमं तस्मै प्रेषयामास येदिलः। तथाऽपि न बिभायास्माद्बर्बरो बलिनां वरः॥१९॥
न यदा येदिलेनैष संपरायमपारयत्। तदा कर्णपुरं सद्यः शिश्रिये दुर्गदुर्गमम् ॥ २० ॥
अथ केनापि यत्नेन जोहराय स येदिलः। हालया साकमज्ञातं हालाहलमदापयत्॥ २१॥
अहो येदिलशाहस्य महती मतिमन्दता। उपकारपरे येन जोहरेऽपनयः कृतः ॥२२॥
अमानुषगतिर्देव्याः प्रसादेन सुदुर्धरः। मोहयित्वा परचमूं परिवेषपरां पराम् ॥२३॥
प्रयातो भूधरात्तस्माद्भूभृद्भृशबलो यदि। मन्यामहे वयं तर्हि नापराधी स जोहरः॥२४॥
अप्रस्तुतमिदं ह्यास्तां प्रथमप्रस्तुतं परम्। सुधांशुदर्शनोद्वेलत्सुधाम्भोधिसहोदरम् ॥२५॥
चरित्रं शिवराजस्य कथ्यमानं सविस्तरम्। निशम्य विबुधैः सर्वैर्निजे हृदि निधीयताम् ॥
बर्बरान्परिधीभूतान्परिभूय स्वतेजसा। बली भृशबलो यावदायाति शिवपत्तनम् ॥ २७॥
तावत्ताम्राननबलैः सबलैः कृतविक्रमम्। संग्रामदुर्गमाक्रान्तं कृत्वा संग्राममद्भुतम् ॥२८॥
तमुदन्तं शिवनृपो निशम्य शिवपत्तने। सर्वनीतिविदां वर्यः सचिवानिदमब्रवीत्। २९॥

शिवराज उवाच-

कार्यान्तरमसक्तत्वान्मयि सान्तरमास्थिते। संग्रामदुर्गसहिता गता चक्रावती पुरी ॥३०॥
इदानीमेव तां दुर्गसहितां दुर्ग्रहामपि। स्वयमभ्येत्य ताम्रेभ्यो ग्रहीतुमहमुत्सहे॥ ३१ ॥
परं त्वापतितं यद्धि कार्यान्तरमनन्तरम्। प्रयतिष्यामहे तस्मै वयं सर्वेऽप्यतःपरम् ॥३२॥
सहायपरिहीनेन नरेणेह न केनचित्। परिभावयितुं शक्या प्रतीपानामनीकिनी ॥ ३३ ॥
तस्माद्यत्नेन महता नरेन्द्रेण विपश्चिता। संग्राह्यानीकिनी शश्वत्परनिग्रहकारिणी ॥३४॥
बहुनाऽर्थेन रहितो महानपि महीपतिः। न तद्विधानां सेनानां संग्रहं कर्तुमर्हति ॥३५॥
अर्थादर्थो भवत्युच्चैरर्थाद्धर्मोऽपि वर्धते। अर्थादेव तृतीयोऽर्थस्तस्मादर्थः प्रशस्यते ॥३६॥
कुलं शीलं वयो विद्या पौरुषं सत्यवादिता। गुणज्ञता च गाम्भीर्यमर्थादेव प्रजायते ॥३७॥
अर्थादसौ परश्चोच्चैर्लोको लोकस्य निश्चितः। पुमानर्थेन रहितो जीवन्नपि न जीवति ॥
यस्यार्थास्तस्य सुहृदो यस्यार्थास्तस्य पौरुषम्। यस्यार्थास्तस्य सर्वेऽपि सहायाः संभवन्ति हि
तद्दुग्ध्वाऽऽत्मप्रभावेण पृथुवत्पृथिवीमिमाम्। तमर्थमाहरिष्यामि यदधीनमिदं जगत् ॥

तदनन्तरमेवोच्चैस्तत्र दिल्लीन्द्रमातुले । करिष्यामि प्रतीकारमगस्त्य इव सागरे ॥ ४१ ॥
इति ब्रुवाणमुचितं सचिवाः सदसि स्थितम् । नयोपेतं विनयिनो व्याहरन्ति स्म भूपतिम्॥

सचिवा ऊचुः—

अर्थः समर्थ इति यद्भवानाह तदर्थवत् । तन्नेति कः प्रतिब्रूते तिष्ठन्वैतण्डिकव्रते ॥४३॥
अर्थः समर्थसामर्थ्याद्धत्ते सामर्थ्यमात्मनि । असमर्थाश्रितस्त्वर्थो नार्थोऽनर्थो हि केवलम्॥
योऽर्थः सर्वेषु लोकेषु स तवैवेति विद्महे । तद्याहि जैत्रयात्रायै शिवराज महाद्युते ॥४५॥
किंच संप्रति सेनानीरिन्द्रप्रस्थेन्द्रमातुलः । संग्रामदुर्गमव्यग्रो जित्वा भूत्वा महामनाः ॥
प्रस्थाय वै पुरः पुण्यपुरमास्थाय च स्थितः । निशम्य त्वां महाबाहो शिवपत्तनवर्तिनम् ॥
भृशं विशङ्कमानोऽन्तः प्रायस्तेनैव वर्त्मना । सह्यशैलावरोहाय सेनां संप्रेषयिष्यति ॥४८॥
अभिद्रवन्ती सह्याद्रेर्यथा सा नावरोहति । तावत्तथा विधातव्यमथान्यदपि सर्वथा ॥४९॥
सचिवानामिति वचो निशम्य समयोचितम् । स धन्यचरितः सम्यगमन्यत महामतिः ॥

मनीषिण ऊचुः—

सहस्रैः सप्तिवाहानां त्रिसप्तत्या समन्वितः । शास्ताखानः किमकरोद्भत पुण्यपुरस्थितः ॥

कवीन्द्र उवाच—

स कारतलबं नाम यवनं कार्यकारिणम् । पुरःस्थितं समाहूय मिथ एतदभाषत ॥ ५२ ॥

शास्ताखान उवाच—

प्रतापी जसवन्तस्ते जनकोऽजवडान्वयः । भवानपि नयत्येतद्युद्धेने(नै)व निजं वयः ॥५३॥
प्रबलं गालिबं जित्वा संप्रति स्वबलाश्रयात् । प्रचण्डपुरमादाय मह्यं दत्तमिह त्वया ॥५४॥
सोऽधिपः सह्यशैलस्य दुर्धर्षः संगरे यथा । करोत्यसुकरं कर्म तवापि विदितं तथा ॥५५॥
स ह्यजय्यः सह्यपतिः सह्यस्याऽऽक्रमणं विना । नैवास्मद्वशतां गन्ता हन्ताहंकारसंयुतः ॥
सेनया सहितः सद्यस्तदद्य त्वं ममाऽऽज्ञया । बत प्रसह्य सह्याद्रेरवरोहे मतिं कुरु ॥ ५७ ॥
अद्यप्रभृत्यहं वीर भविष्यामि भवद्वशः । अवरुह्य धरं सह्यं मह्यं देहि महद्यशः ॥ ५८ ॥
चम्पावत्यथ कल्याणपुरं भीमपुरी तथा । पणवल्ली पुनर्नागस्थानं कार्यं त्वयाऽऽत्मसात् ॥
कच्छपाश्चाहुबाणाश्च महाप्राणा महायुधाः । तथैवामरसिंहोऽपि मित्रसेनः सबान्धवः ॥
गाढान्वयः सर्जराजो राजव्याघ्री च दुर्धरा । जसवन्तश्च कोकाटो यादवश्च महाभुजः ॥
एतेऽतिमहिताः सैन्यसहिताः प्रहिता मया । सैन्यास्त्वामनुयातारो विरोचनमिवासुराः ॥
अग्र्यः समग्रसैन्यानां त्वमव्यग्रः पुरो भव । परिपालयिता पृष्ठं तवाहं प्रेष्ठकारिणः ॥
इत्थं नियुक्तमात्रोऽयं पृतनापतिनाऽमुना । वीरैः परिवृतो वीरः प्रतस्थे प्रथितक्रमः ॥ ६४ ॥
अथ पन्थानमाश्रित्य लोहाद्रेर्दक्षिणोत्तरम् । वीतभीः स बताऽऽरेभे सह्यशैलावरोहणम् ॥
एकपद्या तया यान्ती नलिकायन्त्रतुल्यया । अभूदतीव स्थगिता वाहिनी सा पदे पदे ॥

अस्मादवाङ्मुखीभूताः पताम इति निश्चिताः । नरास्ताम्राननचमूचराः सह्यमवातरन् ॥
अहंकारपरः कारतलबः स्वबलान्वितः । हन्तारं नैव हन्तारं कान्तारं तु व्यलोकत ॥
शून्यामिव परैः पूर्णां तां वन्यां सोऽविशद्यदा । मित्रसेनादयस्तस्य पार्श्वं न विजहुस्तदा ॥
न यत्र पवनस्तत्र यवनः स महावने । निवसन्नवने हेतुमात्मनो न व्यचिन्तयत् ॥ ७० ॥

मनीषिण ऊचुः—

तां वन्यामाविशन्तस्ते द्विषन्तः शिवभूपतेः । अनालोकमयं लोकं पश्यामः स्मेति मन्वते ॥
सह्याद्रेरवरोहन्तं प्रतिकूलमरुद्धतम् । तावदेव शिवः कस्मान्न विरुद्धमरुद्ध तम् ॥ ७२ ॥
विषयः शिवराजस्य स हि सह्यतलाश्रयः । परैर्न कथमाक्रान्तस्तदा तद्ग्रहतत्परैः ॥ ७३ ॥

कवीन्द्र उवाच—

आदावेव हि रुद्धः स्यात्स विरुद्धः शिवेन चेत् । नापतिष्यत्सम सैन्यैस्तर्हि तस्मिन्वनार्णवे ॥
इत्थमेव विनिश्चित्य स तं भुजमदोद्धतम् । न्यरुणत्किल नो तत्र समर्थोऽपि महीपतिः ॥
अधस्तादथ सह्याद्रेः समायातं पुरः पुरः । न्यरौत्सीदध्वनो मध्ये तं शिवोऽभ्येत्य विद्विषम् ॥
तेन राजन्यवीरेण पूर्वमेव नियोजितान् । तत्र तत्र स्थितानेत्य भागयोरुभयोरपि ॥ ७७ ॥
संनद्धा पत्तिमूर्धन्यांस्तां वन्यामन्तराऽन्तरा । नाविदन्नुपकण्ठस्थानपि दिल्लीन्द्रसैनिकाः ॥
अथोदुम्बरखण्डाह्वगहनान्तरवर्तिनीम् । वर्तनीं कारतलबः प्राविशत्पृतनान्वितः ॥ ७९ ॥
ततः सद्यः स्वनन्तीनां भेरीणां निःस्वनो महान् । उपागतः शिव इति प्रतियोधानबोधयत् ॥
तं श्रुत्वा कारतलबः शिवनिःसाननिःस्वनम् । हन्त वीररसावेशे निदधे निजमानसम् ॥
तदा तुङ्गारण्यपतिर्मित्रसेनो महाभुजः । अवतीर्य हयात्तूर्णमवलम्ब्योन्नतां भुवम् ॥ ८२ ॥
स्वीयैः परिवृतो वीरैर्वीरो वीरासने स्थितः । न्युब्जीकृतेषुधिस्तत्र शरसंधानतत्परः ॥ ८३ ॥
चापमारोपयांचक्रे परान्तकरणोद्यतः । अन्येऽप्यमरसिंहाद्यास्तस्थुः स इव संयते ॥ ८४ ॥

अथ सपदि कृशानुयन्त्रगोलैः पदि पदि तत्र विनिघ्नतः प्रतीपान् ।
सरभसमवगम्य स प्रभावी बत यवनः स्वचमूं समुह्य तस्थौ ॥ ८५ ॥
अथ भृशमविहस्तस्तत्र कान्तारगर्भेऽभिनवसुभटशोभाधाम धीरो धनुष्मान् ।
प्रतिनरपतिसैन्यं सादयन्सायकौघैः समरममरसिंहो भूषयामास भूरि ॥ ८६ ॥
अनुवनमपयान्तीं यावनीं वाहिनीं तां बत कथमपि मा भैः (भीः) स्थैर्यमेहीत्युदीर्य ॥
निरुपमनिजचापारोपितैर्बाणवृन्दैर्द्रुतमरुणदमित्रानीकिनीं मित्रसेनः ॥ ८७ ॥
प्रसभममरसिंहमित्रसेनप्रहितशराभिहताः परस्य योधाः ।
स्रवदसृगभिषिच्यमानगात्राः कतिचन पेतुरुपेत्य मोहमुद्राम् ॥ ८८ ॥

प्रतिभयतमां वन्यामेतां सरोषमुपेयुषां
त्यजति न भृशं युद्धावेशं बलं बहलं द्विषाम् ।

सपदि भवता सर्वोऽप्यध्वा तदस्य निरुध्यता-
मिति शिवमहीपालः सेनापतिं स्वमवोचत ॥ ८९ ॥
तदनुतुरगारूढस्तूर्णं वधाय विरोधिनां
जगति जनितोत्कर्षं कर्षन्करेण शरासनम् ।
ज्वलितहुतभुग्ज्वालाजालावलेहितखाण्डवात्
किमपि न पृथासूनोरूनो व्यलोकि सुरासुरैः ॥ ९० ॥
शितविततकृपाणपातितानां रुधिरभरेण विरोधिसैन्धवानाम् ।
शिवसुभटवरैर्वनान्तरालं द्युतिमरुणादरुणामनीयतालम् ॥ ९१ ॥
प्रतिपदमविहस्तैर्मित्रसेनादिभिस्तैरवितमपि तदिन्द्रप्रस्थसुत्रामसैन्यम् ।
प्रतिभटविशिखस्रक्पञ्जराभ्यन्तरस्थं परिचितदुरवस्थं निर्व्यवस्थं व्यरंसीत् ॥९२॥

इत्यनुपुराणे सूर्यवंशे निवासकरकवीन्द्रपरमानन्दविरचितायामध्या-
यशतसंमितायां वैयासक्यां संहितायां कारतलबसैन्या-
गमो नामाष्टविंशोऽध्यायः ॥ २८ ॥

---

## एकोनत्रिंशोऽध्यायः ।

कवीन्द्र उवाच—

अथ द्युतिपतौ देवे दिवो मध्यमुपागते । समेत्य शिवतेजोभिः संतापयितुमुद्यते ॥ १ ॥
अवीक्षितवने तस्मिन्विपक्षविहितावने । अलभ्यमानपवने दूयमानं महावने ॥ २ ॥
विलोक्यानीकमखिलं विषीदन्तमनेकधा । जगाद कारतलबं राजव्याघ्री मदोद्धता ॥३॥

राजव्याघ्र्युवाच—

अङ्कारोपितसैन्यस्त्वमकरोः कर्म गर्हितम् । प्राविशः सहसा येन शिवसिंहाश्रयं वनम् ॥४॥
बत त्वया समानीय सैन्यं दिल्लीपतेरिह । अहो महोत्साहवता पञ्चाननमुखेऽर्पितम् ॥५॥
अद्ययावद्यशो यावदिन्द्रप्रस्थभृताऽर्जितम् । तत्तस्य भवताऽमुष्मिन्विपिने विनिमज्जितम् ॥६॥
पश्चात्पुरस्ताच्च पुनः सव्यदक्षिणपार्श्वयोः । स्थिता पश्य युयुत्सन्ते सोत्सवाः परिपन्थिनः ॥
अमी सर्वे सुप्रयोगसायकास्तव सैनिकाः । तूष्णीमेवाऽऽसते ह्यत्र बताऽऽलेख्यगता इव ॥
अहो दिल्लीन्द्रसेनानीः शास्ताखानोऽल्पचेतनः । परिपन्थिप्रतापाग्नौ ससैन्यं त्वामपातयत् ॥
जीवग्राहं निगृह्याऽऽशु द्वेषणस्त्वां निनीषति । त्वं त्वन्ध इव कान्तारे रुद्धो युद्धं चिकीर्षसि ॥
सत्यां हि फलनिष्पत्तौ पुरुषस्येह पौरुषम् । परथा परिहासाय तदेव खलु साहसम् ॥११॥
तदद्य सद्य एव त्वं तं प्रपद्य महीभृतम् । अये ससैन्यमात्मानं मृत्युपाशाद्विमोचय ॥१२॥
एवं स यवनस्तत्र राजव्याघ्र्या प्रबोधितः । विरराम महावीरः साहसी समरात्ततः ॥१३॥

अथैष संदेशहरं पराभिप्रायवेदिनम् । शिवाय प्रेषयामास प्रह्वभावमुपाश्रयन् ॥ १४ ॥
ततोऽतिसुन्दरोदग्रग्रीवे व्यायतवक्षसि । शिक्षिते लक्षणोपेते महाकाये महौजसि ॥ १५ ॥
पार्श्वद्वितयसंसक्तनिषङ्गद्वयपक्षतौ । सरत्नाभरणे सप्तौ ताक्ष्ये हरिमिव स्थितम् ॥ १६ ॥
आमुक्तवारबाणानां धन्वबाणासिधारिणाम् । बहूनां वाहवाराणां व्यूहाभ्यन्तरवर्तिनम् ॥ १७ ॥
पिनद्धाभेद्यवर्माणं वर्ण्यशीर्षण्यशालिनम् । भव्यसव्येतरस्कन्धविषक्तविशिखासनम् ॥ १८ ॥
वैकाक्षिकीकृतोद्दामफलकोद्योतिताम्बरम् । स्वर्णसारसनालम्बिकौक्षेयककृतश्रियम् ॥ १९ ॥
दीव्यद्दक्षिणपाण्यग्रसंसक्तोन्नतशक्तिकम् । अतिसौम्यमपि स्वेन प्रभावेणातिभीषणम् ॥ २० ॥
पुरः प्रोत्सारणपरैर्हैमवेत्रधरैर्नरैः । यथास्थानीकृतानेकसैनिकैः साधु सेवितम् ॥ २१ ॥
उग्रमुग्रादपि भृशं दुर्धरं दहनादपि । निर्घृणं नैर्ऋताच्चोच्चैर्बलिनं मारुतादपि ॥ २२ ॥
वित्तेशादपि वित्ताढ्यं प्रभुं वज्रधरादपि । दण्डहस्तादपि क्रूरं नीतिज्ञं वरुणादपि ॥ २३ ॥
चन्द्रादपि कृताह्लादं दुर्जयं मन्मथादपि । नरैर्वेत्रधरैस्तत्र नमन्मौलिर्निवेदितः ॥ २४ ॥
स तं राजानमाजानुभुजं दूरादलोकत । शिवं शिवमिवाऽमात्यैः स्वगणैः पर्युपासितम् ॥
अमुं विनम्रमूर्धानं ताम्रदूतमुपागतम् । सरोरुहसदृग्भ्यां स दृग्भ्यां देवोऽप्युदैक्षत ॥ २६ ॥
अथाऽऽज्ञप्तः शिवेनैष किंचिदुन्नमितभ्रुवा । यत्संदेशहरस्तस्य व्याजहार स्वयं वचः ॥

दूत उवाच—

यं कारतलबं नाम लङ्कापतिमिवापरम् । अजय्यं जानते लोकाः स त्वां विज्ञापयत्यदः ॥
शास्ताखाननियोगेन योगेन समयस्य च । बतावलोकितोऽस्माभिः स एष विषयस्तव ॥
न ह्यन्यवशतां गन्ता गुप्तोऽयं विषयस्त्वया । मणिः फणाधरेणेव स्वयमूरीकृताश्रिसम् ॥
हन्त द्वित्राण्यहान्यत्र मया लब्धं न जीवनम् । तस्मादभयदानेन देहि मे मम जीवनम् ॥
तलातलमिवाऽऽसाद्य सह्याचलतलस्थलम् । विरराम श्रिरं चित्ते विस्मरामश्च पौरुषम् ॥ ३२ ॥
तुङ्गारण्यादपि घनं सह्यारण्यमिदं तव । महार्णवसमेऽमुष्मिंस्त्वमस्मच्छरणं भव ॥ ३३ ॥
जनकः शाहराजस्ते महाराजो महामतिः । यवनेऽप्यन्वहं स्नेहमपारमकरोन्मयि ॥ ३४ ॥
तत्सर्वमपि विस्मृत्य परप्रेष्यतया मया । अग्नेरिव तवावज्ञा विज्ञायापि विनिर्मिता ॥ ३५ ॥
तद्द्वितीयं स्वसर्वस्वमात्मानमनवस्करम् । चिकीर्षामि महाबाहो जीवञ्जिगमिषामि च ॥ ३६ ॥
अनुमन्यस्व मां तस्मात्त्वमस्मिन्विषये नृप । प्रपन्नपालनपरो भवानिव भवानिह ॥ ३७ ॥
यथायथं गदित्वेत्थं दूते विरतिमीयुषि । नृपः स्वसैनिकान्वीक्ष्य स तं प्रत्यब्रवीदिदम् ॥

शिवराज उवाच—

यर्हि प्रपद्यसे तर्हि स्वीयया सेनया सह । निर्याहि विषयादस्मादास्तेऽस्मदभयं तव ॥ ३९ ॥
अदो मद्वचनं तस्मै मद्भीताय दयार्थिने । त्वमितस्त्वरितो गत्वा यवनाय निवेदय ॥ ४० ॥

इत्थं शिवनृपोदीर्णामाकर्ण्य रुचिरां गिरम् । दूतः प्रतीक्षमाणाय स्वाधिपाय न्यवेदयत् ॥
तस्मादभयमानीतं तेन दूतेन वै यदा । शिवाय कारतलबः प्रजिघाय बलिं तदा ॥४२॥
युध्यन्तोप्यभयं प्राप्य मित्रसेनादयो नृपाः । शिवाय प्रेषयामासुः स्वं स्वं सद्यः स्वमञ्जसा ॥
अभयं यावदायाति तावद्यवनसैनिकाः । युध्यन्तः शिवसैन्येन लुण्ठिताश्चावकुण्ठिताः ॥४४॥
परस्मै फलकं दत्त्वा कश्चिन्मुक्तोऽभवत्तदा । अवरुह्य हयात्तूर्णं भयात्कश्चिदमुच्यत ॥४५॥
बत तत्र दधानेन वासो लोहितलोहितम् । सद्यो विन्यस्तशस्त्रेण संन्यस्तमिव केनचित् ॥
कर्णाभरणलुब्धेन च्छिन्नकर्णश्च कश्चन । स्वकण्ठाभरणं सद्यो मुक्तामणिमयं जहौ ॥४७॥
वयं शिवनृपस्यैव भवाम इति वादिनः । अमोचयन्निजात्मानं केचित्तुरगसादिनः ॥४८॥
कृपाणच्छिन्नमूर्धाऽपि त्वरमाणोऽभिघातिनम् । सद्यः सहचरं चक्रे चित्रं चक्रेण कश्चन ॥४९॥
अत्रान्तरे सह्यपतेराज्ञया वेत्रपाणयः । ऊर्ध्वीकृतकरास्तारस्वराः क्रोधपरा इव ॥ ५० ॥
तांस्तान्सैन्यपतीनेत्य विपिनाभ्यन्तरस्थितान् । समन्ततः प्रतिभटप्रतियुद्धादवारयन् ॥५१॥
अथ लब्धाभयास्ताम्रसैनिकाः सभया इव । द्रुतं विनिर्ययुस्तस्माद्वनात्परकृतावनात ॥५२॥
अथाऽऽशु ताम्रवक्त्रेषु प्रयातेषु यथागतम् । गर्जत्सु निजसैन्येषु तूर्येषु निनदत्सु च ॥५३॥
पुरःसरेष्वनेकेषु विनदद्वेत्रपाणिषु । जयघोषविशेषेण पूरयत्सु च पुष्करम् ॥ ५४ ॥
भव्याम्बरेषु भव्येषु भव्याभरणधारिषु । उच्चैस्तरां यशोगाथाश्चारणेषु पठत्सु च ॥ ५५ ॥
अपारकोषगर्भासु मञ्जूषासु निजैर्नरैः । क्षिप्रमाह्रियमाणासु ताम्रक्षिप्तास्वितस्ततः ॥५६॥
विमुक्तेष्वटवीगर्भे रिपुभिः प्रपलायिभिः । सैन्यैरानीयमानेषु गजेषु तुरगेषु च ॥ ५७ ॥
भारभीत्याऽवमुक्तानामपयातैररातिभिः । स्थालानां चषकाणां च भृङ्गाराणां च भूरिशः ॥
अन्येषां चाप्यमत्राणां सौवर्णानामनेकशः । स्वभृत्यैः क्रियमाणेषु पर्वतेषु च सर्वतः ॥५९॥
चण्डेन भुजदण्डेन दण्डितारातिमण्डलः । शिवः समीक्ष्य नेतारं सेनापतिमवोचत ॥६०॥

शिवराज उवाच---

याम्यहं येदिलायत्तराष्ट्राक्रमणकर्मणे । इहैव तु त्वया स्थेयं ताम्राननिबर्हणे ॥ ६१ ॥
परावृत्ता एव परे न परावृत्तिकारिणः । इति त्वया न मन्तव्यं ताम्रास्ते ह्यभिमानिनः ॥६२॥
प्रणालाद्रिप्रतिनिधिं द्रुतमादित्सतो मम । उद्यमः सद्य एवायं फलितो भविता न न ॥
इति संमन्त्र्य सेनान्या समं तत्र स मन्त्रवित् । अकारयज्जयी जैत्रप्रयाणपटहस्वनम् ॥
अथ प्रगे प्रजानाथः स आस्थाय हयोत्तमम् । अभूषयत्तमध्वानं वाहिनीव्यूहभूषितम् ॥
क्रमेण क्रममाणोऽसौ पुरग्रामाचलाटवीः । पश्यन्रिपुभिरुत्सृष्टास्तुष्टिमाधत्त भूयसीम् ॥
ततो दाल्भ्यपुरं गत्वा नत्वा दाल्भ्येश्वरं नृपः । आदौ तमेव विषयं व्यधत्त तरसाऽऽत्मसात् ॥
स तदा विषयस्तेन शिवेन स्ववशीकृतः । साध्वसाद्यवनस्पृष्टिसृष्टात्सद्यो व्यमुच्यत ॥
तदा पल्लीवनपतिर्जसवन्तो महाभुजः । स्मरन्कृतचरां स्वेन जोहरस्य सहायताम् ॥६९॥

दुर्विनीतान्तकाद्भीतः शिवादभ्यर्णवर्तिनः । प्रपेदे शरणं सद्यः शृङ्गारपुरनायकम् ॥७०॥
सोऽपि प्रभावलीपालः सूर्यराजः प्रतापवान् । तं जुगोप शिवाद्भीतमात्मानमिव सागसम् ॥
शिवस्तु सूर्यराजस्य जसवन्तस्य चापि तत् । कर्म नामन्यतान्याय्यं परायत्तावुभाविति ॥
अथ दाल्भ्यपुरे राजा यथार्हमधिकारिणम् । निधाय सज्जं युद्धाय वीरं च द्विसहस्रिणम् ॥
व्रजन्नभयदानेन प्रीणयन्नभयार्थिनः । अपश्यच्चित्रपुलिनं पुरं त्रिचतुरैर्दिनैः ॥ ७४ ॥
स तत्र वरदं विश्वविश्रुतं चिरजीविनम् । रैणुकेयं वर्णनीयचरितं निरवर्णयत् ॥ ७५ ॥
अथासौ कालकामाभ्यां भ्रातृभ्यां परिवारितम् । भक्तिमान्भृशमर्हाभिर्भार्गवं समभावयत् ॥
अद्धा परशुरामोऽपि ध्वस्ताविद्धाधिपौजसे । पृथुं प्रसादमकरोदमुष्मै पृथिवीभृते ॥ ७७ ॥
स तत्र भार्गवक्षेत्रे दानशौण्डो दयान्वितः । क्षिप्रदत्तेन वित्तेन विप्रवृन्दमनन्दयत् ॥७८॥
ततोऽधिकारिभिर्म्लेच्छजनैस्तत्क्षणमुज्झितम् । संगमेश्वरयोगेन संगमेश्वरसंज्ञकम् ॥ ७९ ॥
नगरं स्ववशीभूतं प्रभूतद्विजदैवतम् । दृष्ट्वा मनुष्यदेवार्षिर्देवर्षिस्थानमीयिवान् ॥ ८० ॥
तदा तदाज्ञया नीलकण्ठराजात्मजो द्विजः । मल्लसूरान्वयेनोच्चैःपदातिपृतनाभृता ॥ ८१ ॥
तत्तद्युद्धप्रसिद्धेन योदध्रा तानजिता युतः । विपक्षाभ्यागमव्यग्रं संगमेश्वरमागमत् ॥८२॥
गुप्त्यर्थमस्य देशस्य तिष्ठन्ती संगमेश्वरे । अनीकिनी मामकीना शृङ्गारपुरवर्तिना ॥८३॥
कामं त्वयाऽवेक्षणीया यावदागमनं मम । वैमत्यं परिहर्तव्यं कर्तव्यं मदुदीरितम् ॥८४॥
इत्थं संदेशमाप्तेन दूतेन स नृपस्तदा । प्रभावलीभृते भूमिपालाय समदेशयत् ॥ ८५ ॥
अथ पुंनागबकुलप्रसूनप्रायसौरभम् । नागवल्लीनारिकेरक्रमुकप्रायभूरुहम् ॥ ८६ ॥
दैवतप्रायभूभागं द्विजन्मप्रायमानवम् । आरामप्रायभूमीध्रं तीर्थप्रायनदीनदम् ॥ ८७ ॥
तं देशं सपदि स्वीये निदेशे विनिवेशयन् । अयं राजवरो राजपुरं जित्वा व्यराजत ॥

हत्वा म्लेच्छबलं स्वबाहुविभवैराक्रम्य तन्मण्डलं
शक्रश्रीः शरणागताय सदयः सद्यः प्रदायाभयम् ।
धत्ते पोतवणिग्जनैर्धनदतां यस्यान्तिके सागर-
स्तस्मिन्राजपुरे व्यराजततरां राजाधिराजः शिवः ॥ ८९ ॥

इत्यनुपुराणे सूर्यवंशे निवासकरकवीन्द्रपरमानन्दविरचितायामध्याय-
शतसंमितायां वैयासक्यां संहितायां कारतलबपराभवो
नामैकोनत्रिंशोऽध्यायः ॥ २९ ॥

## त्रिंशोऽध्यायः ।

कवीन्द्र उवाच—

अथाग्नियन्त्रसंधानविशेषोदग्रविक्रमान् । प्राकारयुद्धकुशलान्दृध्या जितधनेश्वरान् ॥ १ ॥

मयमायाधरानब्धिमध्यसंचारदुर्धरान् । उन्मार्गवर्तिनस्तांस्तान्फैरङ्गान्यवनावरान् ॥ २ ॥
तथा नौसाधनपरान्मल्लवारानन्नावरान् । सांयात्रिकाननेकांश्च कृतद्वीपान्तराश्रयान् ॥३॥
असंमतांश्च सामन्तान्मत्तानिव महाद्विपान् । बलैरानाय्य स बली तत्तदानाययद्धनम् ॥
स बद्धमुष्टिभिस्तैस्तैरविद्धैश्चिरपालिताम् । स्वहस्तमनयत्सद्यः श्रियं राजपुरस्थिताम् ॥
निक्षेपस्वर्णसंपूर्णकटाहजठरां धराम् । खलान्तकः स खनकैरनेकैः समखानयत् ॥ ६ ॥
न यद्यपि नरेन्द्रस्य तत्र सिद्धाञ्जनाञ्चिते । तदप्यद्धा निधानानि पश्यतः स्म विलोचने॥
न्ययोजयदयं राजा यत्र यत्र निजे दृशौ । तत्र तत्राभवन्मेरुसदृशाः स्वर्णराशयः ॥८॥
महाजनेनोपहृतैरनेकै रत्नराशिभिः । तत्र तस्मै विदूराद्रिरविदूर इवाभवत् ॥ ९ ॥
चिरस्थयवनस्पर्शवशादशुचितां गता । सनिक्षेपां स तत्र क्ष्मां खनकैः क्रिमशोधयत् ॥
जातरूपं तथा रूप्यमारकूटं च सीसकम् । ताम्रं लोहं च वङ्गं च काचं च स्वर्णमाक्षिकम् ॥
मुक्तां मरकतं पद्मरागं वज्रं च विद्रुमम् । खड्गशृङ्गं चामरं च रदं स्ताम्बेरमं तथा ॥१२॥
कस्तूरिकां च काश्मीरं पाटीरं हिमवालुकाम् । कालागुरुं च कर्चूरं कक्कोलं रक्तचन्दनम्॥
एलां च देवकुसुमं त्वक्पत्रं चीनदारु च । कतकं नक्रनखरं नलदं नागकेसरम् ॥१४॥
जातीफलं मातुलानीमहिफेनं च पत्रकम् । राजादनं कन्दरालं द्राक्षां खर्जूरकं तथा ॥१५॥
खर्बूरं मरिचं पूगं देवदारु च नागरम् । ग्रन्थिकं च पलां चव्यं काञ्चनीमथ सैन्धवम् ॥
सौवर्चलं यवक्षारं सर्जिकां च हरितकीम् । वृकधूपं सर्जरसं सिलाजतु च सिक्थकम् ॥
तार्क्ष्यशैलं शिखिग्रीवं चक्षुष्यां यामुनं पुनः । अजमोदां च बाह्लीकं जीरकं लोध्रकं तथा ॥
गुग्गुलं पावकशिखं मञ्जिष्ठां नागसंभवम् । पारदं हरितालं च गन्धाश्मानं मनःशिलाम् ॥
लाक्षां गन्धरसं चापि गोरोचनमथाभ्रकम् । तांस्तान्विषविशेषांश्च तत्तन्निर्हरणानि च ॥
कौशेयान्यथ तार्णानि क्षौमाणि फलजानि च । राङ्कवाणि तथौर्णानि वासांस्यभिनवानि च ॥
एतान्यन्यानि च तदा वस्तूनि बहुशो नृपः । महाभारसहैर्वाहैर्वामीभिर्वृषभैस्तथा ॥२२॥
भारयष्टिधरैश्चापि पुरुषैर्विष्टिकारिभिः । वाहयित्वाऽऽत्मदुर्गेषु तेषु तेषु न्यधापयत्॥२३॥
शठवल्ली समदलं हरचीरी च नेवरम् । मान्धवाटं कुन्तवाटं केळिवल्ली कशेळिका॥२४॥
प्रांशुधामनसं बिल्ववटं च क्षारपत्तनम् । अमून्यन्यान्यपि पुराण्यमुष्मै करमाहरन्॥२५॥
इत्थं स नीवृतस्तांस्तान्वशीकृत्य प्रतापवान् । विविधं धनमाहृत्य स्वराष्ट्राभिमुखोऽभवत् ॥

मनीषिण ऊचुः —

विद्राव्याविद्धपृतनां द्रुतं व्याघ्रपुरं जितम् । तथैव चित्रपुलिनं पुरं निजकरे कृतम्॥२७॥
गृहीतं चाप्रयासेन नगरं संगमेश्वरम् । अहो राजपुरं सर्वमापातालं च खानितम्॥२८॥

गृहीताः संचयाः सर्वे निगृहीताश्च नागराः। तथाऽक्रियत सामर्थ्यात्करदः सरितां वरः॥

शिवराजेन विद्वेषाद्राष्ट्रमेवमुपप्लुतम्। अवेत्य येदिलस्तत्र कमुपायमचिन्तयत्॥ ३०॥

कवीन्द्र उवाच—

सं विरोधी किलास्माकं व्रजन्राजपुरं प्रति। न निरुद्धस्त्वया तस्मिन्वनमार्गे सुदुर्गमे॥३१॥

आस्तामिदमिदानीं तु त्वमस्मदपकारिणम्। समुद्धृत्तं परावृत्तं निरुन्त्स्वाभ्यर्णमागतम्॥३२॥

इत्थमाज्ञां निजां तत्र येदिलो दूनमानसः। शृङ्गारपुरभूपाय प्राहिणोत्सूर्यवर्मणे॥ ३३॥

मनीषिण ऊचुः—

स तदा येदिलस्तांस्तान्परिहृत्य चमूपतीन्। कस्मात्तमेव नृपतिं कार्येऽमुष्मिन्न्ययोजयत्॥

कवीन्द्र उवाच—

भग्नपूर्वाः शिवेनैव रुस्तुमाद्याश्च भूभृतः। प्रभविष्यन्ति नो योद्धुमिति चिन्तयता स्वयम्॥

येदिलेनाटवीमध्यवर्ती पत्तिबलान्वितः। स एव दुष्करेऽप्यस्मिन्कार्ये किल नियोजितः॥३६॥

अथाभिमानैकधनः प्रभावी स भूपतिर्येदिलशासनेन।
दधौ धियं वैरमयीं मदेन करीव सिंहेन समं शिवेन॥ ३७॥
दुरध्वसंचालनसंचिकीर्षया शिवेन विन्यासविदा निवेशिताम्।
अनीकिनीं तामधिसंगमेश्वरं स्थितां ससैन्यः स रुरोध सत्वरम्॥३८॥
स पत्तिसंपत्तियुतो निशीथे निरुध्य सेनां महतीं शिवस्य।
दुर्दैवयोगेन युयुत्सुरुच्चैर्जगर्ज मेघप्रतिमश्चिरस्य॥ ३९॥
उच्चकैः श्रवणगोचरीकृतं पन्नगारय इवाहिफूत्कृतम्।
तत्तदाऽऽयुधभृतो न सेहिरे तानजित्प्रभृतयोऽस्य गर्जितम्॥ ४०॥
तदाऽतिभीतः किल नीलकण्ठराजात्मजो दैवहतः पिलाजी।
प्रभावलीशाय यशांसि दातुममंस्त युद्धादपयानमेव॥ ४१॥
संजातवेपथुममुं भृशमुच्छ्वसन्तं विन्यस्तपाणिगकृपाणमपद्रवन्तम्।
सद्यः स्वयं कतिपयानि पदानि गत्वा धृत्वा करे न्यगकरोत्किल मल्लसूरः॥

मल्लसूर उवाच—

तवाहमस्मिन्समरे सहायः पलायसे हा स्वजनं विहाय।
आसन्पुरा यानि विकत्थितानि तानि क्व तेऽनीकपते गतानि॥ ४३॥
प्रदाय माहात्म्यमभीष्टदेन यः पालितोऽभूः शिवभूमिपेन।
सेनापतिः सोऽद्य विमुक्तसेनः पलायसे हन्त विलज्जसे न॥ ४४॥

इत्युक्त्वा दृषदि निबध्य रज्जुखण्डैस्तं त्रस्तं निजसविधे स्थिरं विधाय ।
आत्मीयां सपदि स तत्र शौर्यशक्तिं शूरेभ्यः पदि पदि दर्शयन्ननर्त ॥
प्रतिहतरिपुशूरप्रस्रवद्रक्तपूरः प्रचुरसमरशोभासुभ्रुवः कर्णपूरः ।
स मृधमधि विरेजे तानजिन्मल्लसूरः समजनि निशि तस्यां तेजसा यस्य सूरः ॥
अथ कृतजयघोषग्रस्तमेघस्वनानां विलसदसिलतानां हन्तुमेवोद्यतानाम् ।
प्रतिपदमविहस्ताः संनिपाते रिपूणां सुमहति कृतहस्ताः सैनिकास्तं ररक्षुः ॥
आतिष्ठ प्रहर प्रयच्छ विरम व्यापारय प्रापय
त्रायस्व त्यज मुञ्च विद्रव नय व्यावर्तयाऽऽलोकय ।
भिन्धि च्छिन्धि गृहाण पातय जहीत्युच्चैस्ततो गर्जतां
योधानामभिधावतामुभयतः कोलाहलः कोऽप्यभूत् ॥ ४८ ॥
स्फूर्जद्रत्नाङ्गुलीयद्युतिशबलनखद्योतिभिः पञ्चशाखैः
स्रस्तोष्णीषैः शिरोभिर्निबिडनिपतितैरङ्घ्रिभिर्बाहुभिश्च ।
अङ्गैरन्यैश्च हन्त क्षणरुचिविलसत्खड्गवल्लीनिकृत्तै-
रुत्कृष्टासृक्प्रवाहप्रचायिभिरथ सा दुर्गमाऽभूद्धरित्री ॥ ४९ ॥
अथ भवति विभावरीविरामे तिमिरमिवार्यमरश्मिभिः समग्रम् ।
शिवनृपसुभटैः प्रसह्य भग्नं सपदि जगाम विराममन्यसैन्यम् ॥५०॥
अथ विहितपलायनेषु तेषु प्रतिनृपसैनिकपुंगवेषु सद्यः ।
स्वनदभिनवमेघसाम्यभाजा सह पटहेन जगर्ज मल्लसूरः ॥ ५१ ॥

इत्यनुपुराणे सूर्यवंशे निवासकरकवीन्द्रपरमानन्दविरचिताया-
मध्यायशतसंमितायां वैयासक्यां संहितायां तानजित्परा-
क्रमवर्णनं नाम त्रिंशोऽध्यायः ॥ ३० ॥

## एकत्रिंशोऽध्यायः ।

**कवीन्द्र उवाच—**

अथ राजपुरात्तूर्णं परावृत्तं शिवं प्रभुम् । प्रत्युद्गम्य समं सैन्यैर्मल्लसूरो व्यलोकत ॥ १ ॥
तं भूरिणा प्रभावेण परिभूतारिसैनिकम् । वन्दमानं नृपः पश्यन्नभिमानधनं तदा ।
उपकण्ठे नीलकण्ठराजात्मजनिवेदितम् । प्रथीयसा प्रसादेन सानीकं समभावयत् ॥३॥

ततः श्रुत्वा तदाद्धस्य सूर्यराजकृतं शिवः । तरस्वी तत्क्षणेऽत्यर्थं क्रुद्धोऽपि क्रोधमावृणोत्
अथ वैवधिकस्तूर्णं विसृष्टः शिवभूभृता । प्रोचे प्रभावलीपालमुपेत्य महितं वचः ॥९॥

वैवाधिक उवाच—

यदा यदा येदिलस्य साहाय्यं समुपेयुषा । भवता शिवभूपस्य बहवो मन्तवः कृताः ॥
यच्च सैन्ये शिवस्योच्चैः संगमेश्वरवर्तिनि । न्यपतः सैन्यसहितो वीतभीर्निशि संप्रति ॥
प्रभावलीपते विश्वजयिना शाहसूनुना । कथं कथय सोढव्यः स तवापनयो महान् ॥८॥
अतः स कुपितोऽप्युच्चैर्दैवादात्तदयस्त्वयि । बताऽऽदिशद्यथाऽद्य त्वां तथा वक्ष्ये निशम्यताम्

शिवराज उवाच—

वनद्विप इवोन्मत्तो मत्तो भीतः पलायितः । यः प्राप्तस्त्वां महाबाहो महाबाहुर्नराधिपः॥
तस्य पल्लीवनपतेर्विमतेर्विहितागसः । उपवर्तवमाहर्तुमुद्यतोऽस्म्यहमञ्जसा ॥ ११ ॥
अथास्मत्तो न भेतव्यमेतव्यमपि च त्वया । तत्र पल्लीवने यत्र दातव्यमभयं मया॥१२॥
आगन्तासि न चेद्दर्पात्तर्हि गन्तासि तद्दशाम् । न विद्यतेऽद्य मत्कोपात्कोऽपि गोपायिता तव॥
ततो वार्तावहादित्थं निशम्य शिवभाषितम् । शृङ्गारपुरभूपालो याहि यामीत्युवाच तम् ॥
अथ पल्लीवनाभ्यर्णमुपेत्य शिवभूभृते । विविक्ते सूर्यराजोक्तं वचनं व्याजहार सः॥१५॥
ततस्तं देशमाक्रम्य शिवः पल्लीवनाह्वयम् । अन्वग्रहीदनुग्राह्यान्निगृह्यान्न्यग्रहीदपि॥१६॥
विप्राश्च बाहुजास्तद्वदूरव्याश्च जघन्यजाः । कांस्यकाराः कलादाश्च व्योकाराः शौल्बिकास्तथा ॥ १७ ॥
तक्षाणः पलगण्डाश्च नापिताः प्रतिहारिकाः । मालाकाराः कुम्भकाराः कारूकाश्च कुशीलवाः
तन्तुवायास्तुन्नवाया रङ्गाजीवाश्च भूरिशः । ताम्बूलिकाश्चाक्रिकाश्च रजकाः शौण्डिका अपि
अजापालाश्च गोपाला देवलाश्च कृषीवलाः । गान्धिकाश्च तथा कान्दविकाः काम्बविकाः पुनः
मार्दङ्गिकाश्च वेणुध्माः पाणिवादाश्च वैणिकाः । वाद्यविद्याविदग्धाश्च लुब्धकाश्चासिधावकाः
कुसीदवृत्तयः काण्डकारिणश्चाहितुण्डिकाः । पादूकृतः पुलिन्दाश्च जालिकाश्च जनंगमाः
उपलब्धभयाः सद्यस्तमेत्य विषयं पुनः । दिने दिने वर्धमानश्रियो नन्दन्ननेकधा ॥२३॥
अथो जनपदस्यास्य रक्षणाय भृशक्षमम् । चिरदुर्गमितिख्यातमवलोक्य शिलोच्चयम् ॥
समन्ततः शिरस्युच्चैः प्राकारेण पटीयसा । परिवारितमुत्साही स कारुभिरकारयत् ॥
अथ मण्डनमस्यैष मण्डलस्येति सूचयन् । शैलमेनं महीपालो व्यदधान्मण्डनाह्वयम् ॥
अथ दुर्गपतिस्तस्मिन्गिरिदुर्गे सुदुर्गमे । निधायामृष्यमध्यक्षं दक्षं रक्षणकर्मणि ॥ २७ ॥
सेनां च कांचिदव्यग्रः समग्रगुणशालिनीम् । प्रभुः प्रास्थित शृङ्गारपुरभूपजिगीषया ॥

मनीषिण ऊचुः—

क्षणात्प्रभावलीपालं परिभावयितुं प्रभुः । पुरैव स कथं यातः शिवः शृङ्गारपत्तनम् ॥
कथं च साभिमानाय दधानाय प्रतीपताम् । अभयं ते ददामीति दूतं तस्मै विसृष्टवान् ॥

कवीन्द्र उवाच—

जयवल्लीजयाद्येन कर्मणा प्रथितं शिवम् । सूर्यराजः पुरा मत्वा पुरारिसमविक्रमम् ॥
प्राज्यं प्रभावलीराज्यं पिपालयिषुरात्मना । तव क्रीतसुतोऽस्मीति वाचिकेन व्यजिज्ञपत् ॥
तदाप्रभृति तं भूपं शरण्यः शरणोन्मुखम् । शिवतातिः शिवनृपश्चिरकालमपालयत् ॥
अयुध्यदरिभिः सार्धं शिवराजो यदा यदा । अकरोदस्य साहाय्यं सूर्यराजस्तदा तदा ॥
अथ दैवध्वस्तधिया परित्यक्तभियाऽमुना । अहंयुना घनारण्यवर्तिना जिह्मवृत्तिना ॥
शिवराजविरुद्धानामविद्धानामनेकधा । व्यक्तमव्यक्तमप्युच्चैर्व्यधायित सहायता ॥ ३६ ॥
दृढव्रतः शिवोऽमुष्मै भूयो भूयः कृतागसे । अपि निग्रहणीयाय निग्रहं न व्यचिन्तयत् ॥
आहूतोऽपि समर्यादं नाऽऽययौ स यदा मदात् । अकुप्यत्सूर्यराजाय भूभृद्दृशबलस्तदा ॥
अथासौ पृथिवीनाथः पदातीनां तरस्विनाम् । युतोऽयुतेन सार्धेन प्रयाणाभिमुखोऽभवत् ॥
नृवाह्यं यानमारुह्य व्रजन्नथ स सत्वरः । समपश्यन्महासारः पुरं सारवरं पुरः ॥ ४० ॥
अथ श्रुत्वा रुषा स्पृष्टं शिवमभ्यर्णमागतम् । प्रभावलीन्द्रो विमनाः स्वजनान्समवोचत ॥

सूर्यराज उवाच—

कृतकर्मा महाबाहुः सुरासुरनरैर्नुतः । सुतः शाहनरेन्द्रस्य नैकसैनिकसंयुतः ॥ ४२ ॥
शृङ्गारपुरमादातुमस्मत्तोऽद्य बतोद्यतः । अज्ञात एव निकटे कूटयोधी किलाऽऽगतः ॥
समर्थेन समं तेन संपरायममुं वयम् । अकूपारमिवापारं पारयिष्यामहे कथम् ॥ ४४ ॥
इत्युक्तवान्स तैस्तत्र स्वजनैरनुमोदितः । रिरक्षयिषुरात्मानमपयाने मतिं दधे ॥ ४५ ॥

मनीषिण ऊचुः—

आसीदवस्थितिर्यस्य वनदुर्गे सुदुर्गमे । अहन्यहनि च प्रायो मतिरायोधनोद्यमे ॥४६॥
सुदुर्धर्षस्य सह्याद्रिर्मनुते यस्य शासनम् । येनान्यदुर्लभं लब्धं बत पूर्वनृपासनम् ॥४७॥
स्वराष्ट्ररक्षणाकाङ्क्षी येन दुर्दान्तचेतसा । कृतागसाऽपि संधाय दौःस्थ्यं तत्याज येदिलः ॥
कुर्वता स्ववशानेव हबसानवशानपि । अकारि विनयग्राही येन वै मकरालयः ॥ ४९ ॥
अनन्ददाधिकं येन पारम्पर्यागता चमूः । यः परेणानुभावेन परिभूतो न केनचित् ॥५०॥
सोऽपि प्रभावलीपालः क्षत्रधर्मविदां वरः । नायुध्यत कथं तेन शिवेनापचिकीर्षता ॥

कवीन्द्र उवाच—

पुरा पुराग्निप्रतिमप्रतापं संगमेश्वरात् । प्रयातं शिवमाकर्ण्य पल्लीवनपुरं प्रति ॥ ५२ ॥

असपत्नमिवाऽऽत्मानं मन्यमानोऽल्पचेतनः । लक्षयन्प्रधनाभावं हर्यक्षसमविक्रमान् ॥
पुञ्जीकृतान्स्वपृतनापतीन्भुवनपूजितान् । तांस्तान्स्वस्वनिकेताय सूर्यराजोऽनुजज्ञिवान् ॥
अथ पल्लीवनात्तूर्णं परावृत्तः शिवो यदा । सूर्यराजः समाहर्तुं सेनां नाभूत्प्रभुस्तदा ॥
अमुना हेतुना नूनं दुर्मनाः स द्विजोत्तमाः । प्रभावलीपरिवृढो न मृधे निदधे मनः ॥
विष्वक्सेनावतारेण नैकसैनिकवर्तिना । दृप्यद्येदिलदोःस्तम्भदार्ढ्य दम्भापहारिणा ॥
दीर्णदिल्लीन्द्रसैन्येन वज्रप्रतिममूर्तिना । अतीवाव्यक्तमन्त्रेण स्वतन्त्रेणानुभाविना ॥
दुर्ग्राह्यविद्विषद्दुर्गग्राहिणा हठवाहिना । चन्द्रराजभुजच्छेदकारिणाऽफजलारिणा ॥५९॥
विरच्य विपुलं वैरं पलायनपरं मनः । चकार सूर्यराजो यत्तन्न चित्रकरं मम ॥ ६० ॥
अथोन्नतानतशिलाशतसंकुलितान्तराम् । तरुकोटरसंविष्टघूकघूत्कारगर्भिताम् ॥ ६१ ॥
महोरगविनिर्मुक्तानेकनिर्मोकभास्वराम् । अपारविटपिव्रातविटपव्याप्तपुष्कराम् ॥ ६२ ॥
उपकण्ठनटन्नैकनीलकण्ठमनोहराम् । नीडान्तरोत्पतत्कीरां किकीदिविकृतस्वराम् ॥
परिश्लिष्टाचलतटामम्भोधरघटाकृतिम् । प्रतिक्षणोच्चलच्छाखामृगान्दोलितपल्लवाम् ॥
स्तब्धरोमसमारब्धघर्घरस्वरघोषणाम् । मृगादनवतीं माद्यदिभसंनिभसैरिभाम् ॥ ६५ ॥
घनकर्मारकुञ्जान्तर्निद्राणव्याघ्रपुंगवाम् । अभीकानेकभल्लूककृतवल्मीकदारणाम् ॥ ६६ ॥
विसंकटामपि कुटैरुत्कटैः कृतसंकटाम् । विशन्सुभटशृङ्गारः स शृङ्गारपुराटवीम् ॥ ६७ ॥
विविधास्कन्दनाकाङ्क्षी सूर्यराजमपद्रुतम् । निशम्यानीकसहितो विमनस्क इवाभवत् ॥

अथ प्रपन्नाभयदायकेन दुर्दान्तदर्पापहसायकेन ।
उपेत्य शृङ्गारपुरं शिवेन भुजस्मयावेशभृता व्यलोकि ॥ ६९ ॥
नृवाह्ययानास्थित एव तूर्णं स्वसैनिकैस्तत्क्षणमेव पूर्णम् ।
प्रविश्य शृङ्गारपुरं प्रपश्यन्स्वमप्यमंस्तैष परैरधृष्यम् ॥ ७० ॥
अजय्यमन्यैरिति विश्रुतं यत्स भूपतिर्वैरिनृपासनं तत् ।
स्पृशन्भृशं स्वेन पदा तदानीमिमानि लोकेन महाभिमानी ॥ ७१ ॥
आदाय तस्मादमयं द्रढीयः समीयुषा पौरजनेन भूयः ।
प्रविश्य शृङ्गारपुरं प्रभूय प्रभूतशृङ्गारपदं व्यधायि ॥ ७२ ॥
अथ कतिपयसैनिकानुयातं प्रतिनृपमाशु दिगन्तमेव यातम् ।
त्रिभुवनजनजित्वरप्रतापः स बत निहन्तुमपत्रपामवापत् ॥ ७३ ॥

इत्यनुपुराणे सूर्यवंशे निवासकरकवीन्द्रपरमानन्दविरचिताया-
मध्यायशतसंमितायां वैयासक्यां संहितायां शृङ्गारपुरप्र-
वेशो नामैकत्रिंशोऽध्यायः ॥ ३१ ॥

# द्वात्रिंशोऽध्यायः ।

कवीन्द्र उवाच—

अथ शाहसुतः प्रभावलीविषयं सर्वमपि स्वतेजसा ।
अकरोन्निजपाणिवर्तिनं नयवर्त्म प्रतनं प्रवर्तयन् ॥ १ ॥
पटुसंगरकर्मकर्मठं प्रथितं त्र्यम्बकभास्करं शिवः ।
सुमतिं सपदि प्रभावलीविषयाध्यक्षपदे न्ययोजयत् ॥ २ ॥
हृतराजपुरश्रियं रुषा जितशृङ्गारपुरं तथौजसा ।
परसैनिकपुङ्गवाः शतं शतमेतं शरणैषिणोऽनमन् ॥ ३ ॥
अथ तस्य पुरस्य रक्षणे क्षणमालक्ष्य सदेशवर्तिनम् ।
स गिरिं प्रथितं प्रतीत इत्यभिधानेन समन्वितं व्यधात् ॥ ४ ॥
अथ चन्द्रमृणालचन्द्रिकामिहिकाचन्दनचम्पकादिभिः ।
उपनीय मुदं तपर्तुना स भृशामोदभृता न्यषेव्यत ॥ ५ ॥
श्रितकेसरकाण्डपाटलीसुमनोदम्भनिषङ्गवाहिना ।
अपि विष्टपजित्वरेषुणाऽतनुनाऽहारि शिवस्य नो मनः ॥ ६ ॥
तपताऽतितरां तपागमे तपनेनाऽऽशु कदुष्णतां गताः ।
सरितस्ततसत्त्वसंश्रयं दधुरन्तः सलिलं सुशीतलम् ॥ ७ ॥
प्रतिवासरकल्पिताम्भसः सरसीः पङ्कनिषण्णसारसाः ।
विरमज्झषकच्छपावलीर्विदधे तीव्रतरातपस्तपः ॥ ८ ॥
प्रतिफुल्लशिरीषपाटलीपटसौरभ्यभृता नभस्वता ।
स्मरतापमबीभरन्मनः सुधियां निर्विषयात्मनामपि ॥ ९ ॥

१ एतदग्रिमो ग्रन्थः संप्रति न लभ्यते । यावानुपलब्धस्तावानेव प्रकाशितोऽस्माभिः

# अथ श्रीशिवभारतान्तर्गताध्यायविषयानुक्रमः


| अध्यायाङ्काः । | विषयाः । |
| --- | --- |
| १ | मङ्गलाचरणम् । तीर्थविध्यर्थं वाराणसीं गतं परमानन्दं प्रति वाराणसीस्थमनीषिणां शिवभूपतिचरित्रविषयिका पृच्छा । परमानन्दस्य तान्प्रति चरित्रकथनविषये प्रतिज्ञा । नारायणांशस्य शिवभूपतेर्मालभूपमुपक्रम्य निखिलस्वकीयचरित्रवर्णनविषयिणी कवीन्द्रं परमानन्दं प्रति प्रार्थना । ततः ‘ अमानुषचारितस्य शिवस्य चरितं वर्णयितुं कथं पारयेयम् ’ इति संचिन्तयन्तं परमानन्दं ‘ मा भैषीः प्रसन्नाऽस्म्यहं मन्निदेशेनैव शिवभूपस्त्वामादिदेश ’ इति भगवत्या देव्या आश्वासनम् । ततश्चरित्रवर्णनाधिकारप्राप्तिकथनम् । शिवभारताख्येऽनुपुराणेऽस्मिन् ‘ श्रीगिरिजाजानेर्महादेवस्य दुर्वृत्तासुरमर्दिन्यास्तुलजायाश्च महिमवर्णनम्, धर्मादिचतुर्विधपुरुषार्थानां तीर्थानां यवनैः सत्रा शिवनृपकृतसंग्रामाणां च वर्णनम्, इत्यादयोऽनेके विषया यथानुरूपावसरं प्रतिपाद्येरन् ’ इति ग्रन्थकृत्कृतसंसूचनम् । पुण्यपत्तनवास्तव्यस्य सूर्यवंशीयस्योमाजानेर्मालवर्मणो नृपतेर्वर्णनम् । शंभुपर्वते श्रीशंभुप्रीतये तत्कृतविस्तीर्णकासारवर्णनम् । तस्मिन्नेव काले देवगिरौ निजामशाहस्य विजयपत्तने येदिलशाहस्य च निवासकथनम् । तयोरुभयोः प्रासङ्गिकविरोधकथनम् । निजामशाहसहाय्यार्थं विठ्ठलाख्यभ्रात्रा सह मालवर्मगमनवर्णनम् । तत्कृतनिजामद्वेषणोच्छेदकथनम् । संतानार्थे मालवर्मकृतशिवाराधनम्, तत्प्रसादेन शाहशरीफाख्यपुत्रद्वयप्राप्त्यादिकथनम् । |
| २ | निजामाज्ञया मालवर्मणो युद्धार्थमिन्दापुरगमनम् । तत्र तन्निधनवर्णनम् । भर्तृनिधनेन विलपन्त्या मालभार्याया विठ्ठलाख्यदेवरकृतोऽनुनयः । मालनिधननिबन्धनो निजामशाहस्य शोकः । शाहशरीफाभ्यां विठ्ठलकृतस्वराज्यपालनम् । शाहस्वरूपवर्णनम् । जिजूनाम्न्या यादवराजात्मजया साकं शाहस्योद्वाहवर्णनम् । जिजूसौन्दर्यवर्णनम् । वधूवरयोर्गृहप्रवेशः । विश्वासराजसुताया दुर्गायाः शरीफस्य च पाणिपीडनवर्णनम् । निजामाश्रितयोस्तयोः शाहशरीफयोः स्वराष्ट्रपरिपालनवर्णनम् । |
| ३ | विठ्ठलराजस्य स्वर्लोकगमनम् । ततः शाहराजो निजे भुजे राज्य- |

अध्यायाङ्काः । विषयाः ।

भारं बिभर्तीति कथनम् । सम्भ-खेल—मल्ल—मम्ब—नाग-पर्शुक—त्र्यम्बक—वक्काख्या विठ्ठलतनूभुवोऽम्बरमतावलम्बिनो वर्तन्ते स्मेति कथनम् । जातुचिन्निजामशाहं दृष्ट्वा तेन समं संभाष्य च जाधवरावप्रभृतिषु वीरेषु प्रतिनिवर्तमानेषु सत्सु महति जनसंमर्दे खण्डागलस्याग्रेसरः करी मदोन्मत्ततया लोकान्पीडयति स्म । तन्निवारणाय प्रयतमानो यादवराजस्य दत्तवर्मा नाम सुतस्तं दन्तावलं शस्त्रैः प्रहृत्य व्याकुलयदिति वर्णनम् । तदसहमानौ सम्भखेलनामानौ विठ्ठलतनयौ खण्डागलं सहायमतानिष्टाम् । तत्प्रसङ्गेन युध्यतोः सम्भदत्तयोः सम्भो दत्तं जघानेति वर्णनम् । पुत्रमरणक्रुद्धस्य यादवराजस्य भृशबलानां च संग्रामवर्णनम् । तस्मिंश्च संग्रामे यादवराजः स्वजामातरमपि शाहं प्रहृत्य मूर्छयांचकार, सम्भं चावधीदिति वर्णनम् । यादवभृशबलयोर्निजामशाहकृतसान्त्वनवर्णनम् ।

४ जाधवराजस्य कुपूयवर्तनमसहमानस्य निजामस्य विषये दुर्मन्त्रचिन्तनकथनम् । तज्ज्ञात्वा यादवस्य दिल्लीश्वरसमीपगमनवर्णनम् । निजामं त्यक्त्वा गतं यादवराजं ज्ञात्वा येदिलस्य महानन्दसमुद्भववर्णनम् । येदिलस्य

अध्यायाङ्काः । विषयाः ।

दिल्लीश्वरेण संधिकथनम् । दिल्लीश्वरकृतस्तत्स्वीकारश्च । जहानगीर इभरामं येदिलसहायार्थं संप्रेषयति स्मेति कथनम् । ताम्राननसहायेन येदिलो निजामं तृणायापि नामन्यतेति कथनम् । निजामोऽपि शाहादिभिर्युक्तं ताम्राननं न गणयामासेति वर्णनम् । येदिलो दिल्लीन्द्रस्य सहायार्थं प्रायतिष्ट, दिल्लीन्द्रनिदेशेन निजामशाहेन योद्धुं जहालजहानखञ्जीरसिकन्दरप्रमुखा योधा दक्षिणां ककुभं संप्रापन्, तत्कृतनिजामदेशाक्रमणमित्यादिकथनम् । अम्बरसहायार्थं शाहादीनां प्रापणम् । दिल्लीन्द्रनिजामसेनयोस्तुमुलसंग्रामवर्णनम् । शाहशरीफखेलादीनामतुलपराक्रमेण ताम्राननसैन्यस्य पलायनम् । मनचेहरसैन्यकृतशरीफवधवर्णनम् । अनुजविनाशेन क्रुद्धस्य शाहस्य पराक्रममसहमानस्य बलस्य कान्दिशीकतां वीक्ष्य शाहशर्मसैन्यकृतसिंहगर्जनावर्णनम् । ताम्राननसेनायाः शाहकृतबन्धनकथनम् । विजयिनः सेनापतेरम्बरस्य भृशबलैः साकं निजामशाहदर्शनार्थं प्रयाणवर्णनम् ।

५ खेलादिविठ्ठलपुत्रैः कृतस्पर्धस्य शाहवर्मणः स्वदेशगमनवर्णनम् । स्वसांनिध्यनिवासार्थं शाहवर्माणं प्रति

अध्यायाङ्काः । विषयाः ।

येदिलप्रार्थना । शाहसहायेन येदिलकृतशत्रुपराभवः । शाहकृतोऽम्बरपराजयः । शाहकृतो मुधपराभवः। केरलकर्नाटकादिदेशान्विजित्य शाहवर्मकृतामिभरामकोशविवर्धनम् । जिजूदेव्याः पातिव्रत्यम्। शिवजन्मप्रस्ताववर्णनम्। म्लेच्छभाराक्रान्ताया विश्वंभरायाः स्वदुःखनिवेदनार्थं परमेष्ठिसंनिधिगमनवर्णनम् । विधातारं प्रति स्वोद्धारार्थं प्रार्थना। यवनकृतवैदिकधर्मध्वंसनिवेदनम् । " धरे, मा भैषीः पुरा मया करुणाजीमूतो मुरारिः परया भक्त्या प्रार्थितः स्वयं मामुवाच—दाक्षिणात्यस्य शाहभूपतेर्जिजूनामिकाया भार्यायाः पुत्रतां प्रतिपद्य तव प्रियं विधास्यामि '—इति । तद्वसुंधरे स्थिरा भव" इत्यादिब्रह्मकृतं धरां प्रति समाश्वासनम् । धात्री वैधात्रीं वाचं श्रुत्वा स्वाधिष्ठानं प्रतस्थ इति कथनम् । मानुषभावस्वीकारे प्रभोरिच्छा समजनीति कथनम् ।

---

६ शिवाख्यया प्रादुर्बुभूषोर्विष्णोर्जिजूं प्रति दर्शनम् । योगेश्वरस्य तत्कालिकस्वरूपवर्णनम् । जिजोदोहदवर्णनम् । अरिष्टवर्णनम । श्रीशिवजन्मवर्णनम् । तत्स्वरूपकथनम् । शिवप्रादुर्भावसमनन्तरमेव श्रीसरस्वत्यादिदेवतानां तत्समीप आगमनवर्णनम् । शिवस्य जातकर्मादिसंस्कारकथनम् । शिवस्याभिषेकार्थं दशमेऽह्नि कृष्णागोदावरीभीमरथ्यादिसरितां शिवसंनिधावागमनवर्णनम् । देवसेनाशचीस्वाहादिविहितं प्रसूतिकास्नानवर्णनम् । नामकरणसंस्कारकथनम् । शिवस्य भाविविधेयानां वर्णनम् । विविधालंकारैर्विभूषितस्य शिवस्य बाल्यावस्थासौन्दर्यवर्णनम् । उपवेशनान्नप्राशनसंस्कारवर्णनम् । शिवजन्मनः प्राग्दर्याखानं हन्तुं प्रस्थितस्य शाहराजस्य तं हत्वा शिवनेरिदुर्गं प्रति प्रत्यागमनवर्णनम् । शाहकृतशिवमुखावलोकनकथनम् । शिवजन्मोत्सवे शाहकृतविविधवस्तुदानवर्णनम् ।

अध्यायाङ्काः । विषयाः ।

७ शिवस्य बाल्यावस्थोचितानां विविधलीलानां वर्णनम् ।

---

८ शिवजन्मवर्णनं श्रुत्वा कवीन्द्रं प्रति ' यत्र शिवजन्माभूत्स दुर्गो यवनायत्तः, तत्र कथं शाहप्रवेशः ' इति सांशयिकानां मनीषिणां प्रश्नः । तत्संशयनिराकरणार्थं कवीन्द्रकृतकथाप्रस्तावः । निजामस्य विपत्कालं दृष्ट्वा स्वकीयं प्राक्तनं संबन्धं विचिन्त्य विजयपुरं त्यक्त्वा शाहभूपतेर्निजामसमीपे गमनम् । अत्रा-

| अध्यायाङ्काः । | विषयाः । |
| --- | --- |
| | न्तरे विजयराजः शंभुराजाय शाहसूनवे जयन्तीनाम्नीमात्मतनयामनुरूपाममन्यतेति कथनम् । तयोः शंभुजयन्त्योः शिवनेरिदुर्गे विवाहवर्णनम् । नूतनसमवायात्पत्नीमन्तर्वत्नीं तत्र संस्थाप्य दर्याखानजिगीषया शाहः प्रतस्थ इति वर्णनम्। पूर्वोक्तसंशयसमर्थनं श्रुत्वा ‘दिल्लीश्वरं हित्वा यदुराजे ताम्रारयेर्योद्धुं समुद्यते किमचेष्टत निजामः’ इति कवीन्द्रं प्रति मनीषिणां प्रश्नः । तान्प्रति कवीन्द्रस्योत्तरम् दुर्व्यसनभराक्रान्तनिजामकृतयादवावमाननकथनम् । यादवराजस्य निधनम् । श्वशुरविनाशेन संक्रुद्धस्य शाहभूपस्य निजामसाहाय्याद्विराम । ताम्राननपताकिनीविहितधारागिरिवेष्टनम् । येदिलस्य धारागिरिं प्रति सेनाप्रेषणम् । धारागिरिजिघृक्षया शाहिजहानमहमूदसेनयोः संग्रामवर्णनम् । सैन्यद्वयकृतनिजामपराजयवर्णनम् । निजामपराभवमधिकृत्य कवीन्द्रं प्रति मनीषिणां प्रश्नः । कवीन्द्रस्योत्तरम् । कालदुर्विलासवर्णनम् । |
| | करोत्, गोदावरीप्रवराभीमाद्यानां धुनीनां कूलस्थप्रदेशं स्वाधीनं चकारेत्यादिवर्णनम्। दिल्लीन्द्रप्रतीपान् शाहप्रयत्नानवलोक्य घाण्टिककार्ण्टिकादिवीराणां शाहसमीप आगमनम्। तेभ्यः सेनापतिपददानम्। येदिलशाहिजहानयोः संधिः । शाहः कति वर्षाणि ताभ्यामयुध्यत संधिश्च कथं विहित इत्यादिविषयकः कवीन्द्रं प्रति मनीषिणां प्रश्नः । वर्षत्रितयमित्यादि कवीन्द्रस्योत्तरम्। शाहं प्रति स्वप्ने धूर्जटेरुपदेशः शिवनिदेशेन स्वविषयमुज्झित्वा शाहकृत परविषयप्रत्यर्पणवर्णनम् ताम्रयेदिलाभ्यां शाहस्य संधिः । स्वसहायार्थं शाहनृपमानेतुं तन्निकटे स्वामात्यप्रेषणम् । शाहकृतस्वीकारवर्णनम्। शाहेन साकं फरादयाकूतादियुतस्य रणदूहलस्य महमूदाज्ञयाकर्णाटगमनम् । शाहकृतकर्णाटविजय वर्णनम्। प्रसन्नात्मना रणदूहलेन पारितोषिकीकृते बिङ्गरूरपत्तने शाहनिवासः । बिङ्गरूरवर्णनपूर्वकशाहराजैश्वर्यकथनम् । शिवस्य प्राथमिकशिक्षणवर्णनम्। |
| ९ | देवगिरिं गृहीत्वा ताम्राननसैन्ये महता मोदेन महमूदसैन्ये च दुःखेन स्वस्वविषयं गते शाहराजः शिवनेरिप्रभृतीन्दुर्गान् स्वायत्तान- |
| १० | शिवस्य शाहराजकृतं पुण्यपत्तनाधिपत्यम् । तद्विषयकमनीषिप्रश्नः । शाहस्वप्नवर्णनम् प्रभाकरनामकपुरोहितसविधे शाहभूपस्य |

# विषयानुक्रमः


अध्यायाङ्काः । विषयाः ।

स्वप्नार्थविषयकः प्रश्नः । 'शुभसूचकोऽयं स्वप्नः' इति तदुत्तरम् । स्वप्ने शिवनिदेशेन पुण्यदेशाधिपत्येन शाहः शिवमयोजयदिति वर्णनम् । शिवराजस्य स्मृतिपुराणेतिहासादिशिक्षणवर्णनम् । शिवोद्वाहवर्णनम् ।

११ शिवभूपस्य पुण्यपत्तनगमनानन्तरं शाहः किमकरोत्, महमूदश्च कथमवर्ततेति मनीषिणां प्रश्नः । कर्णाटमण्डलं वशी चकारेत्यादि कवीन्द्रस्योत्तरम् । वीरभद्रस्य सिंहासनारोहणवर्णनम् । शाहं नियन्तुं महमूदो मुस्तुफाखानमादिशदित्यादिवर्णनम् । मुस्तुफाखानस्य कर्णाटागमनवर्णनम् । आयान्तं मुस्तुफं श्रुत्वा शाहस्य प्रत्युद्गमनम् । शाहं प्रत्याययितुं मुस्तुफप्रयत्नः । सेवकानाधिकृत्य मुस्तुफस्योपदेशः 'शाहं निगृह्णीत, इति मुस्तुफस्य स्वसैनिकानादेशकथनम् । शाहशिबिरे महोत्पाताः । शाहनिरुत्साहवर्णनम् ।

१२ मुस्तुफाखानसैन्यकृतशाहशिबिरनिरोधवर्णनम् । शाहमुस्तुफसैन्यसं शाहशिबिरविध्वंसनम् । बाजराजकृतशाहनिग्रहवर्णनम् ।

१३ पितृनिरोधानन्तरं शंभुशिवौ किमकार्ष्टामिति कवीन्द्रं प्रति मनीषिप्रश्नः । तदुत्तरोपक्रमः । विङ्गरूरजिघृक्षया मुस्तुफस्य तानजिदादीन् प्रति तत्र गमननिदेशः । महमूदस्य च शिवस्य विषयान्प्रति गन्तुं स्वकीयवीराणां प्रेषणम् । फत्तेखानादीनां बेलसराख्यनगरे सेनाभिनिवेशवर्णनम् । शिवराजस्य स्वकीयसैनिकान्प्रति प्रोत्साहनात्मकं भाषणं बल्लालं निगृह्णीतेति निदेशश्च । शिवनृपाज्ञया तद्वीराणां शिरोबलं प्रति प्रयाणम् । बल्लालस्याऽऽत्मीयसैनिकान्प्रति प्रोत्साहकवचनम् । शिवबल्लालबलयोः संग्रामवर्णनम् । हैबतसुतवधवर्णनम् ।

१४ हैबतसुतनिधनं श्रुत्वा संक्रुद्धस्य फत्तेखानस्य शिवराजजिगीषयाऽभियानवर्णनम् । ससैन्यस्य तस्य पुरंदराधिरोहणम् । शत्रुसेनामवलोक्य शाहात्मजकृतसमरदुंदुभिवादनवर्णनम् । शिवफत्तेखानसैन्ययोस्तुमुलसंग्रामवर्णनम् । युद्धावलोकनार्थं तत्र पुरंदरदुर्गे देवागमनवर्णनम् । [illegible]खानवधवर्णनम् । शिव[illegible] फत्तेखानसैन्यस्य [illegible]जीवित[illegible]च्छया पलायनम् । [illegible] फत्तेखानस्य

अध्यायाङ्काः । विषयाः ।

विजयनगरगमनम् । महमूदस्य विमनस्कत्वकथनम् ।

---

१५ शिवस्योत्कर्षमात्मीयमपकर्षं च विज्ञायमहमूदस्याग्रिमविधेयचिन्तनवर्णनम्। प्रासङ्गिकं शंभुकृतफरादपराभवकथनम्। येदिलस्य शाहराजो मोक्तव्यो न वेति विचारवर्णनम्। 'बिङ्गरूरसिंहगडगिरिद्वयप्रत्यर्पणाभिवचनस्वरूपात्मकेन समयेन मोक्तव्यः' इति स्वीयविचाराणां निजप्रकृतिसविधे कथनम्। तेषां विषयेऽस्मिन्संमतिकथनम्। 'बिङ्गरूरसिंहदुर्गप्रत्यर्पणेन मोक्ष्यामि कारातः' इति शाहं प्रति येदिलवचनम्। तद्भाषणस्य शाहभूपकृतस्वीकारः। पितुर्निदेशेन शंभुशिवौ बिङ्गरूरसिंहपर्वतौ येदिलायादातां शाहस्य बन्धमोचनं च।

---

१६ ईप्सितलाभेन महमूदस्याऽऽनन्दकथनम्। सिंहपर्वतप्रत्यर्पणात्मिकया पित्राज्ञया क्षुब्धस्य शिवभूपस्य विजयनगरजिघृक्षाकथनपूर्वकं सुवर्णशर्माणं प्रति 'नियुज्यन्तां तुरंगिणः' इत्याज्ञाकथनम्। 'बलवद्भिर्विरोधो न हि विधातव्यः, बलवद्विरोधेनैव तव जनकः शाहभूपो बन्धनमन्वभूत्, येदिलताम्राननौ भवद्भ्यो नितरामक्रुधताम्, तावुभावपि यदि संयुज्याभ्यागच्छेतां नतरां भवन्तोऽग्रे स्थातुमपि पारयेयुः, तद्यूयं सुदृढं कमपि दुर्गमं दुर्गं लभध्वं, भेदावलम्बं कुरुत,' इत्यादिसुवर्णशर्मकृतस्योपदेशस्य वर्णनम्। शिवकृतस्वीकारकथनम्।

---

१७ अलीशाहकृताफजलवर्णनम्। अफजलनिकटे शिवपराक्रमवर्णनम्। शिवकृताद्भुतकृत्यनिदर्शश्च। अफजलकृतस्वप्रौढिवादः। तत्कृता शिवभूपजयविषयिणी संधा च। येदिलकृततत्सत्कारवर्णनम्। अलीशाहादफजलस्य हस्तितुरगादिप्राणिनां विविधशस्त्राणां तथाऽन्यवस्तूनां प्राप्तिवर्णनम्। येदिलकृतस्याफजलस्य सेनापतित्ववर्णनम्। महता सैन्येन सह विजयनगरादफजलप्रयाणवर्णनम्। गच्छतोऽफजलस्याशुभशकुनवर्णनम्। अफजलसेनावर्णनम्। मध्येमार्गं सेनाभिनिवेशकथनम्।

---

१८ 'पुण्यप्रान्तस्थं शिवमुपेक्ष्य सोऽफजलः किमर्थं वैराटं विषयमभ्यगमत्' इति मनीषिकृतप्रश्नः। कवीन्द्रस्योत्तरम्। चन्द्रराजादीनां वधं विधाय शिवनृपो जयवल्लीं जग्राहेति कथनम्। चन्द्रराजभ्रातुः प्रतापवर्मणः पलायनपूर्वकं येदिलाभ्यासगमनवर्णनम्। प्रतापकृतं येदिलस्य सेवादिवर्णनम्। 'चन्द्रराजराज्यं शिवनृपतेः सकाशाद्बलात्प्रगृह्य तुभ्यं

| अध्यायाङ्काः । | विषयाः । |
|---|---|
| | दास्यामि ' इति प्रतापं प्रति चन्द्रराजस्याऽऽश्वासनम् । प्रतापकृतमफजलसहायम् । वैराटनगरेऽफजलागमनम् । अफजलमागतं श्रुत्वा शिवराजस्याग्रिमविधेयविचारवर्णनम् । पदातिभिः सह शिवस्य जयवल्लीप्रयाणवर्णनम् । शिवं प्रति पत्रद्वाराऽफजलवाचिकवर्णनम् । शिवकृततत्पत्रवाचनम् । भाविविषयाणां कथनविषये कवीन्द्रस्याऽऽश्वासनम् । |
| १९ | अफजलस्तवनपूर्वकं शिवस्य तन्निकटे स्वदूतप्रेषणं स्वाशयाविष्करणं च । अफजलस्य स्वसैनिकान् प्रति भाषणम् । सैनिकानां तन्निकटे च स्वाभिप्रायाविष्करणम् । शिवस्याद्भुतपराक्रमवर्णनम् । अफजलं प्रति जयवल्लेर्दुर्गमत्वात्तत्राऽऽगमनं वरमिति सैनिकानां मन्त्रकथनम् । तच्छ्रुत्वाऽफजलस्य क्रोधाविर्भावकथनम् । अफजलप्रयाणम् । |
| २० | शिवभूपस्य देव्या दर्शनं प्रसङ्गाद्देवीवर्णनं च देव्या वन्दनम् । ' यवनपुंगवोऽफजलस्त्वया साकं युयुत्सुरुपैति तं जहि ' इत्याद्यग्रिमविधेयसूचकं शिवं प्रति तुलजाया निदेशवचनम् । देव्याः शिवकृपाणीप्रवेशस्य कथनम् । स्वसैनिकानुद्दिश्य शिवभूपस्य रहस्यकथनम् । ससैन्यस्याफजलस्य जयवल्लीमार्गे गमनम् । पर्वतारोहणावरोहणकालेऽफजलबलस्य दुरवस्थितिवर्णनम् । अफजलस्य जयवल्लीदर्शनम् । कुमुद्वतीकूलेऽफजलचमूनिवेशवर्णनम् । कुशलपृच्छार्थं शिवाफजलयोः परस्परं स्वस्वदूतप्रेषणम् । रत्नग्रहणार्थं रत्नोद्यमिनां शिवाह्वानेन गमनम् । शिवभूपवधविषयेऽफजलस्य दुर्विचारसरणिवर्णनम् । |
| २१ | कवीन्द्रस्य शिवाफजलयोः समयकथनविषयिका प्रतिज्ञा । तदुभयोः परस्परदर्शनकाले नियमवर्णनम् । उपाध्यायवचनाद्गिरिजाजानिं संपूज्य दधिदूर्वादिमङ्गलवस्तुस्पर्शं विधाय शिवभूपस्याफजलसंनिधौ गमनवर्णनम् । तत्कालिकशिवस्य नेपथ्यवर्णनम् । शिवाफजलयोः परस्परदर्शनवर्णनम् । शिवमधिकृत्याफजलभाषणम् । तदुत्तरं शिवग्रीवाग्रहणपूर्वकं शिवकुक्षौ स्वकीयकृपाणस्य निखननम् । शिवः कृपाणिकाग्रेणाफजलकुक्षिं विदारयामासेति वर्णनम् । अफजलस्य शिववधविषये स्वसैनिकान्प्रति कथनम् । शिवभूपकृताफजलवधकथनम् । सय्यदादीनां शिववधार्थमभिगमनम् । |

| अध्यायाङ्काः । | विषयाः । |
|---|---|
| | शिवसैनिककृततन्निरोधः । जीवमाहिलकृतसय्यदवधवर्णनम् । प्रतापगडे जयदुंदुभिध्वनिवर्णनम् । |
| २२ | अफजलवधोत्तरं खानसैन्यस्य भवर्णनम् । मुसेखानस्य स्वसैन्यं प्रत्युत्साहवर्धिष्णुवचनम् । अफजलज्येष्ठात्मजपलायनम् । शिवसैन्यकृतरणदूहलनिरोधवर्णनम् । येदिलसैन्यस्थाग्रेसराणां भटानां शिवभूपसैन्यविहितबन्धनवर्णनम् । जयवल्लीनिकटचरारण्यस्य भयानकत्वकथनम् । शिवसेनाकृतखानसैन्यपराजयवर्णनम् । विजयशालिनां शिववीराणां विजयपूर्वकं शिवनृपदर्शनकथनम् । जगदवितुमवतीर्णस्य विश्वंभरस्य शिवराजस्य ; नैतच्चित्रं चरित्रमित्यादि कथनम् । |
| २३ | विपद्गतानां परसैनिकानां शिवकृतनिरीक्षणम् । परसैन्यादानीतानां सौवर्णराजतपणादीनां स्वकीयकोपागारे निधानवर्णनम । ‘ अलीशाहस्य तां सेनां शिवो जयवल्लीमहाम्भोधौ न्यमज्जयत्तावत्तस्य सेनापतिः क्वत्यः किमकरोत ? ’ इति कवीन्द्रं प्रति मनीषिप्रश्नः । अफजलं हन्तुं शिवनृपे प्रस्थिते तत्सेनापतिः शत्रुदेशं जग्राह, अफजलप्रेषितसैनिकाः शिवविषयमपि जगृहुरित्यादिवर्णनम् । तच्छ्रवणानन्तरं शिवसेनापतिकृतस्वदेशगमनम् । सेनापतेः प्रतिज्ञा । सेनापतिं प्रति शिवसंदेशः । अफजलवधोत्तरं सेनापतेर्वैराटविषये गमनम् । सेनापतेरुपेक्षया सुसेखानादीनां पङ्क्तिहरित्सु पलायनम् । दुर्गमे पथि शत्रुसैन्यं कथं पलायते स्मेति मनीषिणां प्रश्नः । अफजलवधोत्तरं पलायनपरस्य तत्सैन्यस्य शिवपदातिकृतनिरोधः । शिवाफलसेनासंग्रामः । मुसेखानस्य प्रतापरावं प्रति दुर्गमप्रदेशाद्बहिर्गमनार्थं मार्गप्रदर्शनार्थं प्रार्थना । प्रतापकृतस्वीकारश्च । अफजलात्मजस्य वैराटतो गमनवर्णनम् । शिवस्य परायत्तान्विषयान्ग्रहीतुं वैराटदेशे गमनम् । शिवकृतकृष्णातीरस्थदेशाक्रमणम् । शिवसेनाकृतचन्दनवन्दनाख्यदुर्गद्वयनिरोधः । नायकनामकयो राज्ञोर्हिलालं पुरस्कृत्य शिवं प्रति शरणार्थं गमनम् । आत्मनीनतया शिवस्तान्सभृद्धानकरोदिति वर्णनम् । खट्वा- |

| अध्यायाङ्काः । | विषयाः |
|---|---|
| | दुर्गमायाभवनीरामपुरादीनां शिवनृपकृतं स्वायत्तीकरणम् । शिवकृतं प्रणालदुर्गस्याऽऽवरणम् । शिवदुर्गाधिपसेनयोः संग्रामः । शिवराजकृतं प्रणालशैलस्य ग्रहणम् । तत्सौन्दर्यवर्णनं च । |
| २४ | अफजलवधानन्तरं पराभूता मुसेखानादयो येदिलसैनिकाः किमकार्षुः, प्रणालदुर्गग्रहणानन्तरं स शाहात्मजश्च किं व्यधादिति मनीषिणां प्रश्नः। पराजयव्रीडितान्मुसेखानादीन्प्रति येदिलस्योत्साहसंवर्धकं भाषणम् । येदिलाज्ञया रुस्तुमं सेनान्यं विधाय मुसेखानादीनां विजयपुटभेदनतो गमनम् । पूर्वप्रेषितप्रणिधिद्वारा येदिलकृतं प्रणालशैलपराभव श्रवणम् । येदिलप्रार्थनया दिल्लीपतिस्तत्सहायार्थं स्वसैन्यं प्रेषयामासेति वर्णनम् । शिवस्य प्रणालशैलरक्षणपूर्वकं परसेनां प्रत्याभिगमनम् । रुस्तुमस्य स्वसैनिकान्प्रति स्वसेनासंनिवेशविधानकथनम्।शिवस्यापि स्वीयवीरान्प्रति सेनाव्यूहविषये कथनम्। शिवसेनाकृतसिंहनादादिवर्णनम्।शिवरुस्तुमसैन्ययोः संग्रामवर्णनम् । हीरवर्महिलालयोस्तुमुलयुद्धवर्णनपूर्वकं परसैन्यनाशवर्णनम्। रुस्तुमस्य पराभवः शिवराजविजयवर्णनम् । |

| अध्यायाङ्काः । | विषयाः । |
|---|---|
| २५ | रुस्तुमपराजयानन्तरमल्लीशाहविषयं वशमानेतुं महतीं सेनां प्रेषयामास, तस्याः सेनायाः सेनापतिर्येदिलराष्ट्रं वशी चकारेत्यादिवर्णनम् । स्वराष्ट्रस्य बलस्य च नाशमवलोक्य चिन्तार्णवे निमग्नो येदिलः कर्णपुराधीशं जोहरं शिवं निग्रहीतुं प्रेषयामासेति वर्णनम् । जोहरस्य तुरगिभिः सह प्रणालदुर्गगमनम् । रुस्तुमफाजलयोस्तथैव बाजराजभाईखानपीडनायकादीनां येदिलाज्ञया जोहरसहायार्थं तत्समीपमागमनम्। जोहरफाजिलरुस्तुमादिविहितं प्राक् प्रणालदुर्गस्य वेष्टनम् । सादातमसूदबाजराजादिरचितं प्रत्यग्वेष्टनम् । अन्यसेनाकृतं दक्षिणत उत्तरतश्च रोधनम् । उपत्यकास्थजोहरस्याधित्यकागतशिवस्य च बहूनि दिनानि समरोऽभूत्तथाऽपि जोहरो न यशः संपादयामासेत्यादिवर्णनम् । 'अल्लीशाहेन स्वसहायार्थं दूतं संप्रेष्य दिल्लीपतेर्वाहिनी समागाहूता तस्या नायकः क आसीत्, सा च केन पथा क्व प्रतस्थे किमकारि च तया' इत्यादिविषयको मनीषिणां प्रश्नः । दिल्लीपतिर्धारागिरितलस्थितां स्वसेनां स्वकीयमातुलस्य शास्ताखानस्य सैनापत्ये प्राहिणोदित्यादिकथनम् । दिल्लीशाज्ञया शमसजाफरादीनां स्वस्वसैन्येन सत्रा शास्ताखानानुगमन- |

| अध्यायाङ्काः । | विषयाः । |
| --- | --- |
| | वर्णनम् । सप्तसप्ततिसहस्रसंख्याकतुरगैः सह शास्ताखानो भीमाख्यसरित्तीरस्थशत्रुविषयं प्रापदिति कथनम् । यवनसेनाकृतमन्दिरारामादिध्वंसवर्णनम् । चक्रवर्तीनिरोधकथनम् । शिवनिरोधविषयेऽलीशाहस्य जोहराय संदेशकथनम् । |
| २६ | यवनसैन्यकृतसाहसवटादिग्रहणम् । राजमातुः शरीरे वीररसाविर्भावः । तस्याः संग्रामविषयकं भाषणम् । शिवसेनापतेर्नेतुः शाहपुरदाहपूर्वकं शिवपत्तनप्रयाणम् । नेतुः शिवमातू राजदुर्गे दर्शनम्। हिलालेन सहितस्य तस्य सैन्याधिपस्य राजमातरं प्रति वन्दनम् । 'प्रणालाचलमूर्धनि मम बहिश्चरः प्राणो विरुद्धै रुद्धोऽतस्तमात्मनो वत्सं विमोचयितुं प्रयतिष्ये, जोहरस्य मूर्धानं च युधि हरिष्ये' इत्यादिविषयकं राजमातुः सहिलालं सैन्येशं प्रति भाषणम् । राजप्रसूभाषणोत्तरं सेनापतिवचनम्। हिलालात्मजस्य वाहवाहस्य परसेनाव्यूहे प्रवेशः । परसैन्यशस्त्रप्रहारेण संजातमूर्छस्य तस्य भूमौ निपातवर्णनम् । शत्रुशिबिरप्रापणवर्णनं च। जोहरवीरप्रभावेण हिलालादीनां पलायनवर्णनम् । 'युध्यन्तोऽपि नेतृपुरःसरा वीराः प्रणालाचलं प्रयातुं नान्तरं प्रपेदिरे' इत्यादिवर्णनम् । नेतृप्रमुखवीराणां पराभवं निशम्य शिवस्य क्रोधसंवर्धनम् । शिवस्वप्नगतायास्तुलजायाः शिवं प्रति भाविविधेयविषयकं भाषणम् । देव्या अन्तर्धानकथनम् । प्रणालपर्वते भास्करसुतं त्र्यम्बकं सेनान्यं विधाय पदातिसैन्येन सह शिवस्य शत्रुकृतनिरोधाद्बहिर्निर्गमनवर्णनम्। ससैन्यस्य शिवभूपस्य विश्रमार्थं विशालदुर्गे निवासकथनम् । |
| २७ | 'जोहरः प्रणालाद्रेः शिवनिर्गमं कथं नाज्ञासीत्' इत्यादिविषयको मनीषिणां कवीन्द्रं प्रति प्रश्नः । 'येदिलेन समाहूतैस्तास्रैर्मे विषयो वशयितुमुपक्रान्तः, अतः संप्रति तैर्योद्धुं प्रस्थीयते मया, त्वया मम संग्रामविशारदैर्योधैर्योद्धव्यम्' इत्याद्याशयकः शिवस्य जोहरं प्रति संदेशः । 'पर्वतस्य निरोधने भावीखानाद्यो भटास्तेन जोहरेण संदिष्टाः' इत्यादिवर्णनम्। शिवनिर्गमविषये जोहराय गूढपुरुषाणां निवेदनकथनम् । शिवनिर्गमेन चकितचकितस्य जोहरस्य शिवानुगमनविषये मसूदाय निदेशः । मसूदजसवन्तसूर्यराजादिकृतविशालपर्वतपरिधीकरणवर्णनम्। उभयसेनाकृतायोधनवर्णनम् । मसूदादीनां पराभववर्णनम् । मसूदस्य पराभवव्रीडितस्य जोहरसमीपे |

अध्यायाङ्काः । विषयाः ।

गमनम् । विशालपर्वताद्राजदुर्गं प्राप्तस्य शिवस्य स्वजननीदर्शनवर्णनम् । स्वीयेष्टसिद्धिविषये शास्तासानस्य चिन्ताकथनम् ।

———

२८ 'भृशबलोत्तंसे राज्ञि राजगिरिं गते प्रणालाद्रेः का गतिः' इति कवीन्द्रं प्रति मनीषिणां प्रश्नः । 'अत्र शास्ताखानः, अन्यत्र जोहरः, तर्हि कथं वयं युगपदुभयत्र योद्धुं शक्नुयाम, अतस्त्वं प्रणालाद्रिं येदिलाधीनं विधायात्राऽऽयाहि, इह कार्यान्तरमुपस्थितम्' इति शिवस्य त्र्यम्बकं प्रति संदेशः । नृपाज्ञया प्रणालस्य जोहराय वितरणम् । जोहरस्य येदिलसमीपे गमनं तद्दर्शनं च । 'नायं जोहरस्त्वया हन्तव्यः' इति देव्याः शिवं प्रति निदेशः । जोहरनाशविषये मनीषिणां कवीन्द्रं प्रति पुनः प्रश्नः । प्रणालपर्वताच्छिवनिर्गमं ज्ञात्वाऽलीशाहस्य जोहरविषये क्रोधः । 'लुब्धात्मना त्वया भूरि धनं लब्ध्वा प्रस्थास्यञ्छत्रुरुपेक्षितः, तस्मात्तेन भूपतिना यद्वस्त्वदायि तन्मह्यं देहि नो चेन्मरिष्यसि' इति येदिलस्य जोहरसमर्यादं वर्णदूतप्रेषणम् । ततो जोहरस्य कर्णपुरं प्रति गमनम् । सहालाहलहालादानेन येदिलकृतेन जोहरविनाशवर्णनम् । येदिलमौढ्यवर्णनम् । शत्रुसैन्यकृतं संग्रामदुर्गस्याऽऽक्रमणं श्रुत्वा शिवस्य सचिवान् प्रति तद्दुर्गस्य प्रतिग्रहणविषयेऽर्थस्य स्तवनपूर्वकं भाषणम् । ततः शिवनृपं प्रति सचिवानां समयोचितवचनम् । 'त्रिसप्तत्या सहस्रैः सप्तिवाहानां समन्वितः शास्ताखानः पुण्यपुरभेदनस्थः किमकरोत्' इति मनीषिणां कवीन्द्रं प्रत्यनुयोगः । कारतलबं प्रति दिल्लीन्द्रमातुलस्य खानस्य भाविविधेयविषयकं कथनम् । प्रस्थितस्य कारतलबबलस्य पथ्यन्तराऽन्तरा स्खलितत्ववर्णनम् । 'सह्यशैलादवरोहन्तं तं परं शिवः कस्मान्न न्यरौत्सीत्' इति मनीषिणां पृच्छा । 'यद्यादावेव मया स विरुद्धो रुद्धः स्यात्तर्हि ससैन्यो नाऽऽपतिष्यत्, इति मनस्यानीय न न्यरुणत् शिवः' इति कवीन्द्रस्योत्तरम् । शिवकारतलबसेनासंग्रामवर्णनम् । मित्रसेनामरसिंहादीनां पराक्रमवर्णनम् । कारतलबसैन्यदुःस्थितिकथनम् ।

२९ 'शिवं शरणं व्रज' इति राजव्याघ्र्याः कारतलबं प्रत्युपदेशः । शिवं प्रति कारतलबदूतगमनम् । प्रसङ्गाच्छिववर्णनम् । कारतलबस्य दूतद्वारा शिवे प्रत्यभययाचनम् ।

अध्यायाङ्काः । विषयाः ।

'यर्हि स्वीयया सेनया सह प्रपद्यसे तर्हि मे विषयान्निर्याहि ' इत्यादि शिवस्य कारतलबं प्रति दूतद्वारा प्रतिसंदेशकथनम् । दूतस्य कारतलबं प्रति शिवसंदेशवचनम् । मित्रसेनादीनां शिवाय बलिप्रेषणम् । यवनादिसैन्यस्य शिवसैन्यकृतलुण्ठनम् । शिवस्य निजसैनिकान्प्रति ' युद्धान्निवर्तध्वम् ' इति निदेशकथनम् । ताम्राननसैन्यस्य तस्माद्वनान्निर्गमनम् । शिवसैन्यकृतविजयघोषणादिवर्णनम् । ' येदिलेनाऽऽक्रान्तं विषयं प्रतिग्रहीतुं गच्छाम्यहं त्वं ताम्रमुखनाशार्थं संनद्धोऽत्रैव तिष्ठ' इति शिवस्य नेत्राख्यं सेनानायकं प्रति कथनम् । शिवस्य जयशब्दपूर्वकप्रयाणवर्णनम् । शिवस्य दाल्भ्यपुरग्रहणम् । पल्लीवनपतेर्जसवन्तस्य शाहात्मजभयाच्छृङ्गारपुरनायकाश्रयणकथनम् । शिवस्य चित्रपुलिनगमनवर्णनम् । कामकालाभ्यां भ्रातृभ्यां परिवारितस्य भार्गवस्य शिवकृतपूजनवर्णनम् । शिवस्य परशुरामकृतप्रसादकथनम् । ततस्तस्य देवर्षिस्थानप्रयाणकथनम् । राजाज्ञया नीलकण्ठसुतस्य संगमेश्वरगमनम् । प्रभावलीभृते भूमिपालाय दूतद्वारेण संदेशकथनम् । शिवकृतराजपुरजयवर्णनम् । राजपुरे वास्तव्यस्य शिवस्य समृद्धिवर्णनम् ।

———

अध्यायाङ्काः । विषयाः ।

३० फैरङ्गादिराजभ्यः शिवस्य बलिग्रहणम् । यवनैश्चिरं संचितस्य धनस्य स्वायत्तीकरणवर्णनं च । जातरूपरूप्यसीसकताम्रादीनां भारवाहकैरश्वादिभिः स्वदुर्गप्रापणवर्णनम् । 'शठवल्लीसरदलहरचीरीनैवरक्षारपत्तनादीन्यपि शिवराजाय करमाहरन् ' इत्यादिवर्णनम् । शिवस्य स्वविषये प्रयाणम् । ' दाल्भ्यपुरचित्रपुलिनसंगमेश्वरादीन्विजित्य ततः शिवः स्वविषयं प्रतस्थ इति श्रुत्वा येदिलः कमुपायं योजगमासेति मनीषिणां कवीन्द्रं प्रति प्रश्नः । शृङ्गारपुरभूपाय सूर्यवर्मणे ' परावृत्तं शिवभूपं निरुन्धि ' इति संदेशकथनम् । 'येदिलोऽन्यांश्चमूपतीनुज्झित्वा तमेव राजानं कार्येऽस्मिन् किमित्ययोजयत्' इति मनीषिणां पुनः प्रश्नः । 'इतरे रुस्तुमाद्या भग्नमनोरथा योद्धुं न प्रभवेयुरिति स एव योजितः'इति तदुत्तरवर्णनम् । संगमेश्वरस्थितस्य शिवसैन्यस्य सूर्यवर्मसैन्यकृतवेष्टनवर्णनम् । 'सूर्यवर्मणो मेघगर्जितं तानाजिप्रभृतयो न सेहिरे' इत्यादिकथनम् । नीलकण्ठात्मजस्य पिराजीसंज्ञस्य जन्यात्पलायनवर्णनम् । मल्लसूरकृतधिक्कारपूर्वकतद्द्वन्द्ववर्णनम् ।

| अध्यायाङ्काः । | विषयाः । |
| --- | --- |
| | मल्लसूरपराक्रमपूर्वकं जयघोषणकथनम् । |
| ३१ | राजपुरात्तूर्णं परावृत्तं शिवं सैन्येन समं मल्लसूरं व्यलोकतेति कथनम् । शिवकृतं तानाजितः संमानवर्णनम् । प्रभावलीपालं प्रति शिवराजप्रेषितदूतस्य 'पल्लीवनपतेर्देशं ग्रहीतुमुद्यतोऽस्मि, तत्र त्वयाऽऽगन्तव्यम् । यदि दर्पान्नागमिष्यसि तर्हि । गोपायिता तेऽत्र विद्यते' इत्याद्यावश्यकभाषणम् । 'त्वं याहि याम्यहम्' इति सूर्यराजस्य शिवदूतं प्रति प्रतिवचनम् । सूर्यराजप्रत्युत्तरम् । शिवसमीपे दूतकृतं कथनम् । यवनत्रासितानां लोकानां शिवप्रभावात्स्वीयदेशप्राप्त्या सौख्यास्थितिवर्णनम् । चिरदुर्गस्य 'मण्डनगडः' इति नामकरणकथनम् । मण्डनदुर्गे स्वसैन्यं निधाय शृङ्गारपुरजयार्थं शिवस्य प्रस्थानकथनम् । 'प्रभावलीपालं परिभावयितुं प्रभुः शिवः पुरैव शृङ्गारपुरजिगीषया कथं न प्रायात्' इति मनीषिणां प्रश्नः । 'तव क्रीतसुतोऽस्मि, इत्यादिप्रार्थनया पूर्वं तत्कृतसाहाय्यं स्मृत्वा च शिवः प्राक्तं जेतुं न प्रययौ' इति कवीन्द्रस्योत्तरम् । ससैन्यस्य शाहसूनोः प्रयाणकथनम् । विमनस्कस्य सूर्यराजस्य पलायनविचारकथनम् । 'प्रभावलीशः शिवेन किं नायुध्यत' इति मनीषिणां प्रश्नः । तत्कारणकथनम् । सूर्यराजशिवराजयोर्युद्धे सूर्यस्य पलायनं श्रुत्वा शिवनृपस्य विमनस्कत्वकथनम् । शिवकृतं शृङ्गारपुरदर्शनं तत्र प्रवेशश्च । |
| ३२ | ग्रीष्मर्तुवर्णनम् । |


इति श्रीशिवभारतान्तर्गताध्यायविषयानुक्रमः

# अथ शिवभारतान्तर्गताध्यायानां पृष्ठाङ्काः ।


| अध्यायाङ्काः । | पृष्ठाङ्काः । | अध्यायाङ्काः । | पृष्ठाङ्काः । |
|---|---|---|---|
| १ | १—४ | १७ | ५०–५२ |
| २ | ४—७ | १८ | ५३–५५ |
| ३ | ७—९ | १९ | ५५–५७ |
| ४ | १०–१२ | २० | ५७–६० |
| ५ | १२–१५ | २१ | ६०–६३ |
| ६ | १५–१९ | २२ | ६३–६६ |
| ७ | १९–२१ | २३ | ६६–६९ |
| ८ | २१–२४ | २४ | ६९–७३ |
| ९ | २४–२७ | २५ | ७३–७६ |
| १० | २७–२९ | २६ | ७६–७९ |
| ११ | २९–३१ | २७ | ७९–८१ |
| १२ | ३१–३६ | २८ | ८१–८५ |
| १३ | ३६–४१ | २९ | ८५–८८ |
| १४ | ४१–४५ | ३० | ८८–९१ |
| १५ | ४५–४७ | ३१ | ९१–९४ |
| १६ | ४७–४९ | ३२ | ९५– |

# अथ श्रीशिवभारतान्तर्गतग्रामादिविशेषनाम्नां कोशः ।

## कोशगतसंकेतचिह्नानामर्थाः—

ग्रा०=ग्रामविशेषनाम । उ०=उपनामविशेषः । व्य०=व्यक्तिविशेषनाम
जा०=जातिविशेषनाम । प्रा०=प्रान्तविशेषनाम । दु०=दुर्गविशेषनाम
न०=नदीविशेषनाम ।

| | |
|---|---|
| अष्टम्—ग्रा० | ( अष्टी ) |
| इङ्गालः—उ० | ( इंगळे ) |
| इन्द्रापुरम्—ग्रा० | ( इंदापूर ) |
| उदुम्बरम्०—ग्रा० | ( औदुम्बर ) |
| उदुम्बरखण्डम्—ग्रा० | ( उंबरखिंड ) |
| कपित्थम्—ग्रा० | ( कवठें ) |
| कर्णपुरम्—ग्रा० | ( कर्णूल ) |
| कर्दमवटम्—ग्रा० | ( कुरुंदवाड ) |
| करवीरपुरम्—ग्रा० | ( कोल्हापूर ) |
| करहाटम्—ग्रा० | ( कऱ्हाड ) |
| कलधौतम्—ग्रा० | ( कलेढोण ) |
| कशेलिका—ग्रा० | ( कशेळी ) |
| काङ्कटः—उ० | ( कंक ) |
| काण्टकः—व्य० | ( काताजी ) |
| काण्टिकः—उ० | ( काटे ) |
| काण्डग्रामः—ग्रा० | ( कांडगांव ) |
| कामनगरी—ग्रा० | ( कामेरी ) |
| किणिका—ग्रा० | ( किणी ) |
| कुण्डजित्—व्य० | ( कोंडाजी ) |
| कुन्तवाटम्—ग्रा० | ( कोतवडें ) |
| केलिवल्ली—ग्रा० | ( केळवली ) |
| कोलम्—ग्रा० | ( कोलें ) |
| क्षारपत्तनम्—ग्रा० | ( खारेपाटण ) |
| खट्वाङ्गकः—उ० | ( खटावकर ) |
| खण्डार्गलः—उ० | ( खंडागळे ) |
| खराटः—उ० | ( खराटे ) |
| गाढः—उ० | ( गाढे ) |
| गोकपाटः—उ० | ( गायकवाड ) |
| गोहग्रामः—ग्रा० | ( घोगांव ) |
| घाण्टिकः—उ० | ( घाडगे ) |
| घोरफटः—उ० | ( घोरपडे ) |
| चक्रावती—ग्रा० | ( चाकण ) |
| चक्रावलीमण्डलम्—प्रा० ना० | ( चाकणप्रांत ) |
| चम्पावती—ग्रा० | ( चौल ) |
| चाहुवाणः—उ० | ( चव्हाण ) |
| चित्रपुलिनम्—ग्रा० | ( चिपळूण ) |
| चिरदुर्गः—दु० ना० | ( पालीचाकिल्ला ) |
| जगत्स्थापकः—उ० | ( जगताप ) |
| जयवल्ली—ग्रा० | ( जावळी ) |
| तञ्जापुरम्—ग्रा० | ( तंजावर ) |
| तञ्जी—ग्रा० | ( जिंजी ) |
| तानजित्—व्य० | ( तानाजी ) |
| ताम्रः—उ० | ( मोंगल ) |
| तिलासङ्गम्—ग्रा० | ( तेलसंग ) |
| तुलजित्—व्य० | ( तुळोजी ) |
| तोमरः—उ० | ( ठोमरे ) |
| त्रिकूटकम्—ग्रा० | ( तिकोटें ) |
| दाल्भ्यपुरम्—ग्रा० | ( दाभोळ ) |
| देवगिरिः—ग्रा० | ( दौलताबाद ) |
| देवर्षिस्थानम्—ग्रा० | ( देवरुख ) |

धामनसम्—ग्रा० ( धामणसें )
धारागिरिः—ग्रा० ( दौलताबाद )
धारावटम्—ग्रा० ( धारवाड )
नागस्थानम्—ग्रा० ( नागोठणें )
नान्धवाटम्—ग्रा० ( नाधवडें )
नेरलम्—ग्रा० ( नेरलें )
नैवरम्—ग्रा० ( नेवरें )
पणवल्ली—ग्रा० ( पनवेल )
पल्लिका—ग्रा० ( पाली )
पारग्रामः—ग्रा० ( पारगांव )
प्रणालाद्रिः—दु० ना० ( पन्हाळा )
प्रवारः—उ० ( पवार )
प्रांशुः—ग्रा० ( पावस )
फलस्थानम्—ग्रा० ( फलटण )
बदरग्रामः—ग्रा० ( बोरगांव )
बिङ्गरूरम्—ग्रा० ( बेंगरूळ )
बिन्दुपुरम्—ग्रा० ( बेदनूर )
बिल्ववटम्—ग्रा० ( बेलवडें )
भीमपुरी—ग्रा० ( भिवंडी )
भिमरथी—न० ना० ( भीमानदी )
भृशबलः—उ० ( भोसले )
मत्ताजित्—व्य० ( मत्ताजी )
मल्लग्रामः—ग्रा० ( मालगांव )
मल्लवारः—जा० ( मलवारी )
मल्लसूर—उ० ( मालुसरे )
महाद्रिकः—जा० ( महाडिक )
महितः—उ० ( मोहिते )
मायावनी—ग्रा० ( मायणी )
मुरवटम्—ग्रा० ( मुरवाड )
यशोजित्—व्य० ( येसाजी )
यादवः—उ० ( जाधव )
येदिलः—उ० ( अदिलशहा )
रणदूलहः—व्य० ( रणदुलाखान )
राजव्याघ्री—व्य० ( रायवागीण )
रायबाकम्—ग्रा० ( रायाबग )
वटग्रामः—ग्रा० ( वडगांव )
वाल्लवम्—ग्रा० ( वाळवें )
विजयपत्तनम्—ग्रा० ( विजापूर )
विद्यानगरम्—ग्रा० ( विजयानगर )
विशालशैलः—दु० ना० ( विशाळगड )
विश्रामपुरम्—ग्रा० ( विसापूर )
विश्वजित्—व्य० ( विसाजी )
वृषपत्तनम्—ग्रा० ( बसवापट्टण )
वैराटम्—ग्रा० ( वाई )
व्याघ्रः—उ० ( वाघ )
शठवल्ली—ग्रा० ( साटवली )
शिरोबलम्—ग्रा० ( शिरवळ )
शिवपत्तनम्—ग्रा० ( शिवापूर )
शूर्पविषयः—प्रा० ना० ( सुंपप्रांत )
श्यामग्रामः—ग्रा० ( सागांव )
श्र्यालयम्—ग्रा० ( शिराळें )
समदलम्—ग्रा० ( सौंदळ )
संगलम्—ग्रा० ( सांगली )
साहसवटम्—ग्रा० ( सासवड )
सिद्धजित्—व्य० ( सिदोजी )
सुरजित्—व्य० ( सूरजी )
सुवर्णशर्मा— / स्वर्णशर्मा— } व्य० ( सोनोपंत )
हमीरः—व्य० ( हंबीर )
हरचीरी—ग्रा० ( हरचेरी )
हरिद्रा—ग्रा० ( हळदीगांव )
हंसकूटः—ग्रा० ( होसकोट )
हुकेरिका—ग्रा० ( हुकेरी )
हूणवटम्—ग्रा० ( हूणवाड )
हेबलम्—ग्रा० ( हेबाळ )

| ग्रन्थनाम् । | मूल्यम् । | |
|---|---|---|
| | रू० | आ० |
| ८५ ज्योतिर्निबन्धः—शूरमहाठश्रीशिवराजविरचितः । ... .... | ३ | १९ |
| ८६ विधानमाला—श्रीनृसिंहभट्टविरचिता । .... .... .... | ४ | ४ |
| ८७ अग्निहोत्रचन्द्रिका—किंजवडेकरोपाह्ववामनशास्त्रिभिः कृता । | २ | १४ |
| ८८ निरुक्तम्—दुर्गाचार्यकृतवृत्तिसमेतम् । भागद्वयात्मकम् । ... | ११ | ४ |
| ८९ काव्यप्रकाशः—संकेताख्यटीकासमेतः । ... .... .... | ३ | ४ |
| ९० शाङ्खायनारण्यकम्—ऋग्वेदान्तर्गतबाष्कलशाखीयम् । ... | ० | ९ |
| ९१ गौतमप्रणीतन्यायसूत्राणि—भाष्यवृत्तिभ्यां समेतानि । .... | ४ | ८ |
| ९२ श्रीमद्भगवद्गीता—सटीकरामानुजभाष्ययुता । ... .... | ७ | ८ |
| ९३ दर्शपूर्णमासप्रकाशः—किंजवडेकरोपाह्ववामनशास्त्रिकृतः । .... | ६ | १२ |
| ९४ संस्कारपद्धतिः—अभ्यंकरोपाह्वभास्करशास्त्रिविरचिता । .... | २ | ८ |
| ९५ काश्यपशिल्पम्—महेश्वरोपदिष्टम् । .... ... .... | ३ | १ |
| ९६ करणकौस्तुभः—कृष्णदैवज्ञविरचितः । ... .... .... | ० | ९ |
| ९७ मीमांसादर्शनम्—सतन्त्रवार्तिकशाबरभाष्योपेतं भागषट्कात्मकम् । | २९ | ९ |
| ९८ धर्मतत्त्वनिर्णयः—अभ्यंकरोपाह्ववासुदेवशास्त्रिप्रणीतः । .... | ० | ९ |
| ९८ धर्मतत्त्वनिर्णयपरिशिष्टम् । ,, ,, .... | ० | १३ |
| ९९ भास्करीयबीजगणितम्—नवाङ्कुराटीकासहितम् । | २ | ० |
| १०० प्रायश्चित्तेन्दुशेखरः—नागेशभट्टविरचितः । कुण्डार्कयुतः । | १ | १० |
| १०१ शांकरपादभूषणम्—पर्वतेइत्युपाह्वरघुनाथशास्त्रिकृतं द्विभागम् । | ८ | ९ |
| १०२ ब्रह्मवैवर्तपुराणम्— भागद्वयात्मकम् । ... ... ... | ९ | ४ |
| श्रीमत्पद्मपुराणम्—महापुराणान्तर्गतं चतुर्भागात्मकम् । | २० | ० |
| सिद्धान्तदर्शनम्—महर्षिवेदव्यासप्रणीतं निरञ्जनभाष्ययुतम् । | १ | ४ |
| आधानपद्धतिः—किंजवडेकरोपाह्ववामनशास्त्रिभिः कृता । | १ | १४ |
| पश्चालम्भमीमांसा—किंजवडेकरोपाह्ववामनशास्त्रिविरचिता । | ० | १० |
| शिवभारतम्—कवीन्द्रपरमानन्दविरचितम् । ... .... | १ | ९ |

# आनन्दाश्रममुद्रणालयमुद्रितग्रन्थावल्या अकरादिवर्णानुक्रमेण ग्रन्थाङ्केन मूल्याङ्केन च सहितं सूचीपत्रम् ।

| ग्रन्थाङ्काः | | मूल्यम् रू० | आ० |
|---|---|---|---|
| ४१ | अग्निपुराणम् | ९ | ४ |
| ८७ | अग्निहोत्रचन्द्रिका | २ | १४ |
| ८४ | अद्वैतामोदः | २ | ० |
| ९७ | आचारभूषणम् | ४ | ६ |
| ९८ | आचारेन्दुः | ४ | ० |
| | आधानपद्धतिः | १ | १४ |
| ८१ | आश्वलायनश्रौतसूत्रम् | ४ | ११ |
| ६२ | ईशकेनकठाद्युप०(रामा०) | २ | ८ |
| ७६ | ईशकेनकठोपनिषदः | १ | ० |
| ९ | ईशावास्योपनिषत् | ० | १४ |
| २९ | उपनिषदां समुच्चयः | ६ | १२ |
| ३२ | ऐतरेयब्राह्मणम् | १० | १० |
| ३८ | ऐतरेयारण्यकम् | ३ | ० |
| ११ | ऐतरेयोपनिषत् | १ | ४ |
| ९६ | करणकौस्तुभः | ० | ९ |
| ७ | काठकोपनिषत् | १ | ४ |
| ६६ | काव्यप्रकाशः | ६ | ४ |
| ८९ | काव्यप्रकाशः | ३ | ४ |
| ९५ | काश्यपशिल्पम् | ३ | १ |
| ६ | केनोपनिषत् | १ | ० |
| ९२ | गणेशगीता | २ | ० |
| १ | गणेशाथर्वशीर्षम् | ० | ६ |
| ७३ | गायत्रीपुरश्चरणपद्धतिः | १ | ८ |
| ६१ | गौतमसूत्रम् | २ | ८ |
| १४ | छान्दोग्योपनिषत् (शां०) | ९ | ० |
| ६३ | छान्दोग्योपनिषत्(रामा०) | ३ | १२ |

| ग्रन्थाङ्काः | | मूल्यम् रू० | आ० |
|---|---|---|---|
| ७९ | छान्दोग्योप०(मिताक्षरा०) | २ | ० |
| २० | जीवन्मुक्तिविवेकः | ३ | १२ |
| २४ | जैमिनीयन्यायमालाविस्तरः | ८ | ० |
| ६९ | ज्ञानार्णवतन्त्रम् | १ | ४ |
| ८५ | ज्योतिर्निबन्धः | ३ | १५ |
| ३७ | तैत्तिरीयब्राह्मणम् | १४ | ८ |
| ४२ | तैत्तिरीयसंहिता | ४८ | १० |
| ३६ | तैत्तिरीयारण्यकम् | ९ | १ |
| १२ | तैत्तिरीयोपनिषत् | १ | १२ |
| १३ | तैत्तिरीयोपनिषद्भाष्यवार्ति० | २ | २ |
| ७८ | त्रिस्थलीसेतुः | ३ | १२ |
| ९३ | दर्शपूर्णमासप्रकाशः | ६ | १२ |
| ७४ | द्राह्यायणगृह्यसूत्रवृत्तिः | १ | ० |
| ३३ | धन्वन्तरीयनिघण्टु रा० स० | ६ | ४ |
| ९८ | धर्मतत्त्वनिर्णयः | ० | ९ |
| ९८ | धर्मतत्त्व०परिशिष्टम् | ० | १३ |
| ९६ | नित्याषोडशिकार्णवः | ३ | ४ |
| ८८ | निरुक्तम् | ११ | ४ |
| ३० | नृसिंहपूर्वोत्तरतापनीयोप० | १ | १२ |
| ९१ | न्यायसूत्राणि | ४ | ८ |
| | पद्मपुराणम् | २० | ० |
| | पश्वालम्भमीमांसा | ० | १० |
| ९२ | परिभाषेन्दुशेखरः | २ | ६ |
| | [illegible] | | |
| | [illegible]म्---आ० | ३ | ० |
| | [illegible]म्---आ० | ० | ४ |
| ९९ | पुरुषार्थचिन्तामणिः | ४ | ० |
| ८ | प्रश्नोपनिषत् | १ | ० |

| ग्रन्थाङ्काः | | मूल्यम् रू० | आ० |
|---|---|---|---|
| १०० | प्रायश्चित्तेन्दुशेखरः | १ | १० |
| १९ | बृहदारण्यकोपनिषत् | ८ | ० |
| १४ | ,, (रामानुजटी०) | ३ | ४ |
| ११ | ,, (मिताक्षरा) | २ | १२ |
| १६ | बृहदारण्यकोपनिषद्भा० | २२ | ८ |
| ७१ | बृहद्योगतरङ्गिणी | १० | १२ |
| ६८ | बृहद्ब्रह्मसंहिता | १ | १२ |
| २८ | ब्रह्मपुराणम् | ६ | ४ |
| १०२ | ब्रह्मवैवर्तपुराणम् (भा० २) | ९ | ४ |
| २१ | ब्रह्मसूत्राणि (शां०) | १२ | ० |
| ६७ | ,, ब्रह्मामृतवर्षिणी-दीपिकासमेतानि | ४ | ८ |
| ८२ | ब्रह्मसूत्रवृत्तिः | २ | ७ |
| ३४ | भगवद्गीता (शां० भा०) | १ | ० |
| ३४ | ,, (सटीकशां० भा०) | ६ | ४ |
| ४४ | ,, (पैशाचभाष्य०) | १ | ८ |
| ४५ | ,, (मधुसूदनीश्रीधरीटी०) | ५ | ४ |
| ९२ | ,, (रामानुजीया) | ७ | ८ |
| ९९ | भास्करीयबीजगणि. सटी. | २ | ० |
| ७९ | भाष्यार्थरत्नमाला | ४ | ४ |
| ५४ | मत्स्यपुराणम् | ६ | ० |
| १० | माण्डूक्योपनिषत् | २ | ५ |
| ९७ | मीमांसादर्शनम् | २९ | ९ |
| ९ | मुण्डकोपनिषत् | ० | १० |
| ६० | यतिधर्मसंग्रहः | १ | १२ |
| ९० | यतीन्द्रमतदीपिक[illegible] | [illegible] | [illegible] |
| ६१ | याज्ञवल्क्यस्मृ[illegible] | [illegible] | [illegible] |
| ४ | योगरत्नाकरः | [illegible] | [illegible] |
| १६ | रसरत्नसमुच्चयः | ३ | १२ |

| ग्रन्थाङ्काः | | मूल्यम् रू० | आ० |
|---|---|---|---|
| २ | रुद्राध्यायः | १ | ६ |
| ८० | वाक्यवृत्तिः | ० | ८ |
| ८९ | वायुपुराणम् | ४ | १२ |
| ८६ | विधानमाला | ४ | ४ |
| २७ | वृन्दमाधवः | ६ | १२ |
| ७७ | वेदान्तसूत्रमुक्तावलिः | २ | ६ |
| ४३ | वैयाकरणसिद्धान्तकारिकाः | ० | १२ |
| २३ | वैयासिकन्यायमालाविस्तरः | १ | १२ |
| २२ | श्रीमच्छंकरदिग्विजयः | ६ | ० |
| १०१ | शांकरपादभूषणम् | ८ | ५ |
| ६५ | शाङ्खायनब्राह्मणम् | १ | ४ |
| ९० | शाङ्खायनारण्यकम् | ० | ९ |
| | शिवभारतम् | १ | ५ |
| ९९ | श्राद्धमञ्जरी | २ | ० |
| १७ | श्वेताश्वतरोपनिषत् | २ | ४ |
| ९४ | संस्कारपद्धतिः | १ | ८ |
| ८३ | संक्षेपशारीरकम् | ९ | १ |
| ३१ | संगीतरत्नाकरः | १० | ४ |
| ५३ | सत्याषाढश्रौतसूत्रम् | २८ | ५ |
| ५१ | सर्वदर्शनसंग्रहः | २ | ० |
| ४० | संध्याभाष्यसमुच्चयः | २ | [illegible] |
| ३९ | संस्काररत्नमाला | १२ | ८ |
| | सिद्धान्तदर्शनम् | १ | ४ |
| २५ | सूतसंहिता | ११ | ८ |
| [illegible] | [illegible]णम् | ३ | ० |
| [illegible] | [illegible]नां समुच्चयः | ५ | ० |
| ७० | स्मृत्यर्थसारः | १ | १० |
| ६१ | हस्त्यायुर्वेदः | ७ | ६ |